॥ शिष्य उवाच ॥

आश्चर्य्यकर्मणां शक्तिः खृष्टीयेष्वादिषु स्थिता ।
इत्थं भूयो गुरो पूर्वं मां विज्ञापितवान् भवान् ॥७३॥
अतस्तान् खार्ष्टकानाद्यानतिमानुषशक्तिकान् ।
कथं केऽप्यपरे मर्त्या अभवन् बाधितुं क्षमाः ॥७४॥

॥ गुरुरुवाच ॥

आत्मरक्षार्थिकां तेभ्यः खृष्टीयेभ्योऽतिमानुषीं ।
तां नाददादीश्वरः शक्तिं प्रमाणार्थं मतस्य तु ॥७५॥
यदा चानेकदेशीया जनास्तन्मतमाश्रयन् ।
तदा प्राक् संस्थिता शक्तिः खृष्टीयेषु न्यवर्त्तत ॥७६॥
यदा हि मेनिरे मर्त्यास्तन्मतस्येश्वरोक्ततां ।
तदाऽद्भुतक्रियाशक्तेर्नासीत् किंचित् प्रयोजनं ॥७७॥
अन्यच्च क्लेशसोढॄणां फलमुत्पद्यते महत् ।
लोभादिरागदान्तिश्च श्रद्धायाश्च दृढीकृतिः ॥७८॥
दुःखानि ये न भुंजंति मदहर्तॄणि मानुषाः ।
मज्जंति व्यसने प्रायो धर्मं चैव त्यजंति ते ॥७९॥
अतोऽद्भुतक्रियाशक्तिमाद्येष्वर्पितवानपि ।
खृष्टीयेष्वीश्वरो दुःखभोगान् न प्ररक्ष तान् ॥८०॥
बलेन मानुषेणापि प्रतिबद्धं यदैधत ।
मतं तत् खार्ष्टकं तत्र शक्तिरैशी प्रतीयते ॥८१॥

॥ शिष्य उवाच ॥

अल्पेष्वब्देषु खृष्टस्य स्वर्गारोहणतः परे ।
गतेषु तच्चरित्राणि यरच्यंतेत्यवग् भवान् ॥८२॥
तदैव रचना तेषां संसारे च प्रचारणं ।
बभूव नच तत्पश्चादिति निश्चीयते कथं ॥८३॥

॥ गुरुरुवाच ॥

वैक्रमस्य शकस्यादाववतारः कृपानिधेः ।
खृष्टस्य भूतले भूतः स्वर्गे चारोहणं पुनः ॥८४॥
तदैव तस्य वृत्तान्तो नृभिः पृष्टः कुतूहलात् ।
तेषां विज्ञापनार्थाय पुस्तकेषु समार्प्यत ॥८५॥
तदैवामी प्रबंधाश्च वस्तुतो रचिता इति ।
अनेन वक्ष्यमाणेन प्रमाणेन दिशामि ते ॥८६॥
श्रीखृष्टीयमतोत्पत्तेः समारभ्याऽधुनावधि ।
बुधैर्निरन्तरं ग्रन्थरचना शतशः कृता ॥८७॥
ग्रंथानां चैकशस्तेषां क्रमशः प्रथमावधि ।
सर्वेषां रचनाकालः सुनिर्णीतोऽभवद् बुधैः ॥८८॥
खृष्टीयशास्त्रभिन्नेषु तेषु ग्रन्थान्तरेषु तु ।
खृष्टीयं कीर्त्यते शास्त्रमुद्धृताश्च तदुक्तयः ॥८९॥
तस्मिन् ग्रंथांतरौघे ये ग्रंथाः प्रत्नतमाः स्मृताः ।
अवतारणिकाः खार्ष्टशास्त्रीयास्तेष्वपि स्थिताः ॥९०॥

तद्ग्रंथरचनाकालनिर्णीतत्वात् प्रतीयते ।
शास्त्रस्य रचनाकालः खृष्टीयस्यापि निश्चितः॥९१॥

॥ शिष्य उवाच ॥

विपक्षगोचरे सिद्धाः श्रीखृष्टस्याद्भुताः क्रियाः ।
सम्यक् परीक्षिताश्चापि तास्तदानीतनैर्जनैः ॥९२॥
तदानीं चैव जीवत्सु तच्चरित्रस्य साक्षिषु ।
वार्त्ता यथातथा सर्वा पुस्तकेषु समार्प्यत ॥९३॥
इत्येतां भवता प्रोक्तां श्रुतवानखिलां कथां ।
मन्ये खृष्टीयशास्त्रीयप्रमाणानि दृढान्यहं ॥९४॥
द्वितीयं त्वैशशास्त्रस्य चिह्नं यत् प्रोक्तवान् भवान् ।
नैर्मल्यमिति खृष्टीये शास्त्रे किं तदपि स्थितं ॥९५॥

॥ गुरुरुवाच ॥

द्वितीयं लक्षणं यत् ते ऽैशशास्त्रविशेषकं ।
प्रोचेऽहं तत् स्फुटं भाति मते खृष्टप्रवर्त्तिते ॥९६॥
तच्छास्त्रोक्तोपदेशानां सर्वथा विमलत्वतः ।
उत्पत्तिरैश्वरी भाति खृष्टीयस्य मतस्य मे ॥९७॥
पवित्रात्मा हि सन् खृष्टः पापहीनश्च सर्वशः ।
आविश्वक्रेऽनुकर्त्तव्यं नृभिः पुण्यनिदर्शनं ॥९८॥
कामक्रोधाभिमानादिभ्रष्टरागविवर्जितः ।
रोगार्त्तानां विपद्बंधान् स मुमोच दयामयः ॥९९॥

मर्त्यांश्च भ्रामितान् पश्यन् सत्यधर्मपराङ्मुखान् ।
कामक्रोधादिबद्धांश्च मुक्तिमार्गे निनाय सः ॥१००॥
ईशस्य हृत्स्थितं प्रेम पूजारीतिसमन्वितं ।
भीयुक्तं मानवैः कार्य्यञ्चेति नित्यमुपादिशत् ॥१०१॥
मुख्येन तेन धर्मेण सार्द्धमन्यांश्च सुक्रियाः ।
कृपां परोपकारं च सत्यमार्जवमेव च ॥१०२॥
निर्वेदं मार्दवं चापि कामलोभादिवर्जनं । [युग्मं॥
इत्याद्यान् आदिशद् धर्मान् खृष्टः पापनिषेधकः॥१०३॥
तस्माच्चिह्नद्वयात् शिष्य व्याकृतात् सांप्रतं मया ।
मतस्य खार्ष्टिकस्याहं तर्कयाम्यैश्वरोद्भवं ॥१०४॥

॥ शिष्य उवाच ॥

खृष्टात् प्राग्भव्यवक्तारो ऽनेके ईश्वरशिक्षिताः ।
देशे यहूद्यके ऽभूवन् इति पूर्वमवग् भवान् ॥१०५॥
नृणामुपादिशन् धर्मान् यदि ते भव्यवाचकाः ।
तदा खृष्टावतारस्य कथमासीत् प्रयोजनं ॥१०६॥

॥ गुरुरुवाच ॥

ऐशादेशप्रदानाय नृनीत्यै वा न केवलं ।
क्षितावववातरत् खृष्टः स्वर्लोकादीश्वरात्मजः ॥१०७॥

विशेषतस्तु मर्त्यानां दंड्यानां पापहेतुतः ।
परित्राणाय लोके स प्रादुरासीन् महात्मकः ॥१०९॥
परंतु तव रुच्यर्थं ख्रृष्टीयस्य मतस्य ते ।
प्रवक्ष्याम्यधुना सारं निबोध्यं त्राणलिप्सुकैः ॥१०९॥
मंतव्या प्रथमं शिष्य सर्वेषां भ्रष्टता नृणां ।
ईशाज्ञोल्लंघकादाद्यान्नुः परंपरयाऽऽगता ॥११०॥
आद्यो हि मानुषोऽशेषनृपिता सृष्टयनेहसि ।
निष्पापो निर्मलश्चासीन् नित्यशर्मा च सर्वशः ॥१११॥
उल्लंघ्य त्वीश्वरस्याज्ञां किल्विषान्धौ पपात सः ।
सर्वा च संततिस्तस्य भ्रष्टभावा प्रजायते ॥११२॥
तद्भ्रष्टभावजाघानां हेतुतश्चाखिला नराः ।
न्यायेन दंडमर्हन्ति स्वस्वमन्दक्रियाफलं ॥११३॥
नृजातिश्चाखिला तस्माद्गर्ह्यात् पापकलंकतः ।
सामान्यान् मलिनीभूता दंड्या दंडाद् बिभेति ह ॥११४॥
विशुद्ध्यै तत्कलंकस्य तदुद्धृत्यै च दंडतः ।
श्रीख्रृष्टो नृमहात्राताऽवततारेश्वरात्मजः ॥११५॥
नृणां चेशावमंतृणामपि त्राणचिकीर्षुकः ।
नृरूपं दयया नीतः स दधारेश्वरोऽपि सन् ॥११६॥
कुमार्य्याश्च सुतो जातो येषूख्रृष्टाभिधोऽपि च ।
स नृणां परिवर्त्तेन दंडं सेहे नराघसां ॥११७॥
क्षमोऽपि खंडितुं शक्तिं जिघांसूनां यहूदिनां ।
स मृत्युं स्वेच्छया सेहे नृहिताय नराघहृत् ॥११८॥

निष्पापस्य तथा तस्य यज्ञरूपेण मृत्युना ।
अशेषमर्त्यपापानां प्रायश्चित्तमसाध्यत ॥११९॥
एतस्मिन् विषये शिष्य नृत्राणाय प्रतीयते ।
अतीवाश्चर्य्यमीशस्य प्रसादस्य निदर्शनं ॥१२०॥
ईशं हि स्वीयकर्त्तारं पातारं च कृतघ्नकाः ।
नासेवन्त नरा भक्त्या न तदाज्ञा अपालयन् ॥१२१॥
क्षमावांस्त्वीश्वरस्तेषां स्वद्वेष्टॄणामपि क्षयं ।
न चक्रे किंतु पुत्रं स्वं तन्त्राणायानुदद् भुवि ॥१२२॥
स तु नृणां परित्राणं साधयित्वा स्वमृत्युना ।
मुक्तो मृत्युवशाज्जीवन्नचिरेण बभौ पुनः ॥१२३॥
ततः स स्वर्गमारुह्य मृत्युजेता महात्मकः ।
पुनर्भीमे विचाराहे स्वर्गादायास्यति क्षितौ ॥१२४॥

॥ शिष्य उवाच ॥

मनुष्याः ख्रीष्टसंसिद्धप्रायश्चित्तफलानि किं ।
लभन्ते सकला एव केवला वा नृसत्तमाः ॥१२५॥

॥ गुरुरुवाच ॥

ये लोके साधवो भान्ति तेऽपि शिष्य स्वभावतः ।
प्रभ्रष्टा स्वीयपापाच्च दंडयोग्या भवंति वै ॥१२६॥
निष्पापो मानुषः कोऽपि संसारेऽत्र न वर्त्तते ।
दुष्यन्ति त्वीश्वरस्याग्रे सर्वे न्यूनाधिकं नराः ॥१२७॥

तस्माच्च केवलं खृष्टप्रायश्चित्तस्य हेतुतः ।
नरा अघक्षमां लब्धुं शक्नुवंति न चान्यथा ॥१२८॥
पश्चात्तापं तु यः कोऽपि स्वीयपापकृते दृढं ।
खृष्टश्रद्धान्वितः कुर्य्यात् स मुच्येत स्वकिल्विषैः ॥१२९॥
विमूढाः परमार्थं च चिन्तयेयुर्नरा यथा ।
तथा सदात्मना स्वेन करोतीशः सहायतां ॥१३०॥
सदात्मनः प्रसादेन खृष्टे श्रद्धां करोति यः ।
ईशाज्ञापालनं चैव स्वर्गं शेषे स यास्यति ॥१३१॥
यावत् तु सोऽत्र संसारे जीवेत् तावद्घोद्भवैः ।
क्लेशैर्नमोक्ष्यते सम्यग् विविधैर्धार्मिकोऽपि सन् ॥१३२॥
यतः श्रद्धादयो दुःखैः परीक्ष्यन्ते गुणाः समे ।
संसारसंपदासक्तिर्दृढा च प्रतिबध्यते ॥१३३॥

॥ शिष्य उवाच ॥

सदात्मा यस्त्वया प्रोक्तो हे गुरो कः स विद्यते ।
खृष्टश्च कथमीशस्य पुत्रः खृष्टीयकैर्मतः ॥१६४॥

॥ गुरूरुवाच ॥

इदानीं विषये यस्मिन् शिष्य प्रश्नं करोषि तं ।
गूढत्वान् मानुषी बुद्धिरवगन्तुं न शक्यति ॥१३५॥
यत् तु प्रतीयते शास्त्रान् मतारंभाच्च खार्ष्टकैः ।
धृतं परंपराप्राप्तं मतं तत् कथयामि ते ॥१३६॥

पितृपुत्रसदात्मेति त्रिरूपात्मक ईश्वरः ।
मंतव्य एक एवापि निर्विकारः सदा स्थितः ॥१३७॥
पितेश्वरोऽस्ति पुत्रश्च तथा विद्यत ईश्वरः ।
सदात्मा चेश्वरोऽस्त्यत्र कर्त्तव्यः प्रत्ययो दृढः ॥१३८॥
न त्रयस्त्वीश्वरा ज्ञेया एक ईशस्तु केवलं ।
अनादिः शाश्वतोऽनन्तो निर्विकार्यात्मरूपकः ॥१३९॥
स्वपुत्रं प्रेरयामास नृत्राणाय पितेश्वरः ।
पुत्रस्त्ववारत् क्षौणौ प्रायश्चित्तं ससाध च ॥१४०॥
सदात्मा च प्रसादेन सत्तमेन स्वकेन वै ।
नृषूत्पादयति श्रद्धां तत् स्वान्तानि पुनाति च ॥१४१॥
अतोऽत्यन्तदयाहेतोः पितृपुत्रसदात्मनां ।
प्रेम्णा भयेन चास्माभिः स्तुतिः कार्य्या निरंतरं ॥१४२॥

॥ शिष्य उवाच ॥

खृष्टे यः कोऽपि विश्वस्यात् लभते सोऽघमोचनं ।
स्वर्गीयानन्दसंयुक्तमिति बुद्धं भवद्वचः ॥१४३॥
गम्यां विश्वासमात्रेण पापमुक्तिं तु ये विदुः ।
किं तेऽङ्घोमुक्तिसौगम्यान्नाघे मज्जंति खार्ष्टिकाः ॥१४४

॥ गुरुरुवाच ॥

विश्वासात् केवलाद् यान्ति खृष्टीयाः पापमोचनं ।
अन्यत्रैशदयातः क्व शरणं दोषिणां भवेत् ॥१४५॥

तिष्ठेत्तु यो रतो ऽङ्गस्सु श्रीखृष्टस्यानुगोऽपि सन् ।
नरस्स यर्थविश्वासः किल्विषैः स्वैर्न मोक्ष्यते ॥१४६॥
विश्वासो वास्तवो यस्य खृष्टीयस्य स सन्ततं ।
करोत्यङ्घोघृणां धर्म्यः कुकर्माणि च वर्जति ॥१४७॥
अङ्घःकृते ऽनुतापं तु पापवर्जनसंयुतं ।
अकृत्वा पुरुषः कोऽपि वास्तवो नास्ति खार्ष्टकः ॥१४८॥
अन्यच्च ज्ञायते शास्त्रैः खार्ष्टकैः शिष्य दौष्ठवं ।
दण्डत्वं चैव पापस्य घृणितस्येश्वरेण वै ॥१४९॥
यतोऽपहृतये यस्यावततारेश्वरात्मजः ।
स्वदेहयज्ञरूपं च प्रायश्चित्तं व्यधात् स्वयं ॥१५०॥
यच्छोधनाय चाश्चर्य्यं प्रायश्चित्तं तमैश्वरं ।
आवश्यकं विनिर्णिन्ये दयालुः परमेश्वरः ॥१५१॥
तत् पापं विभुना दण्ड्यमिहामुत्र भवेन्न किं। [विशेषकं
यत्नाच्च मानुषैस्त्याज्यं दुःखदं नरकावहं ॥१५२॥ त्रिभि

॥ शिष्य उवाच ॥

श्रीखृष्टादिष्टमार्गेण सर्वथैव प्रयांति ये ।
आचारः कीदृशस्तेषामित्येतन्मे प्रपंचय ॥१५३॥

॥ गुरुरुवाच ॥

खृष्टीया ये यथाशास्त्रं समन्तादाचरंति ते ।
सेवंते ईश्वरं भक्त्या तदाज्ञाः पालयंति च ॥१५४॥
अजस्रं चिन्तयन्तश्च श्रीखृष्टस्य दयां वरां ।
कृतज्ञत्वेन तस्येष्टास्ते कुर्वंति मुदा क्रियाः ॥१५५॥

स्वाभाविकां च जानन्तो भ्रष्टतां स्वामगर्वकाः ।
पापत्यागाय सामर्थ्यं तेऽर्थयन्ते सदात्मनः ॥१५६॥
दोषाश्च बहवोऽस्माभिः कृता मन्दैरनेकशः ।
इत्थं विचिंत्य शोचंति याचंते चेश्वरात् क्षमां ॥१५७॥
क्रियाश्चास्माकमीशेन ज्ञाताः सर्वविदेति ते ।
स्मरन्त ईश्वरेष्टेन चेष्टन्ते चलितुं पथा ॥१५८॥
कृपामीशस्य चालोक्य कृतघ्नानपि नॄन् प्रति ।
यतन्ते तेऽपि नॄंस्तद्वदुपकर्त्तुं दयालवः ॥१५९॥
ईश एव ददात्यृक्थमिति ध्यात्वा निजं धनं ।
स्वेषु स्वभोगमात्रार्थं न मन्यन्ते समर्पितं ॥१६०॥
धनं तु न्यस्तमस्मासु सुक्रियायै दयालुना ।
ईशेनेत्येव मत्वा ते प्रवर्त्तन्ते सुकर्मसु ॥१६१॥
भुंजाना मितरूपेण चैहिकानि सुखानि ते ।
स्वर्गीयशर्म कांक्षंति तत्र न्यस्तहृदो दृढं ॥१६२॥
खृष्टीया ये यथाशास्त्रमाचरंति समन्ततः ।
आचारो विद्यते तेषामीदृशो निर्मलात्मकः ॥१६३॥

॥ शिष्य उवाच ॥

यः प्रोक्तो भवता स्वर्गः कीदृग् लोकः स विद्यते ।
या मता खार्ष्टकैर्मुक्तिः सा च कीदृग् भवेद् गुरो ॥१६४॥

## ॥ गुरूरुवाच ॥

भीमे महाविचाराहे भीमतेजोऽन्वितः पुनः ।
श्रीखृष्ट एष्यति क्षौणौ सर्ववेत्ताऽक्षदर्शकः ॥१६५॥
तदा चाशेषमर्त्यानां स विचारं करिष्यति ।
नराश्च सर्वदेशीया लप्स्यन्ते स्वक्रियाफलं ॥१६६॥
तदानीं धार्मिकाः स्वर्गे मुक्तिं प्राप्स्यंति शाश्वतीं ।
दुष्टाश्च ताडयिष्यंते सन्ततं नरकेऽक्षये ॥१६७॥
मया प्रोक्ता तु या मुक्तिर्न सा ब्रह्मलयात्मिका ।
स्वर्गे त्ववस्थितिर्नित्या निर्मले पुण्यशर्मदे ॥१६८॥
मर्त्यैर्न सोऽर्जितः स्वर्गः स्वकीयैः पुण्यकर्मभिः ।
श्रीखृष्टस्य त्वनन्तेन पुण्येनोपार्जितोऽस्ति सः ॥१६९॥
अतः प्रविश्य तत्स्वर्गे नृगणा न कदाचन ।
तस्मात् पतेयुरिष्टे तु तिष्ठेयुस्तत्स्थले निशं ॥१७०॥
मर्त्यैः संसारकारास्थैः पापान्धीभूतमानसैः ।
बोद्धुं न शक्यते स्पष्टं तत् सुखं पारलौकिकं ॥१७१॥
या त्वाशोत्तेजिका वार्ता शास्त्राच्छिष्यानुभूयते ।
तां श्रुत्वा स्वर्गलाभार्थमीहस्व प्रार्थयस्व च ॥१७२॥
सन्तः खृष्टीयशास्त्रोक्तं स्वर्गं ये प्राप्नुवंति ते ।
अमृत्युभावमापन्नास्तत्र स्थास्यंति शाश्वतं ॥१७३॥
न तस्मिन् सत्तमे लोके शुभानन्दसमन्विते ।
प्रवेष्टुं शक्नुयाच्छोको दुःखसंघश्च पापजः ॥१७४॥

भूत्वा तेजस्विवर्ष्मा हि निर्मलात्मा प्रवृद्धधीः ।
भोक्ष्यत्यम्लानमानंदं पुण्यो ऽसौ स्वर्गभाग्गणः ॥१७५॥
यत् तत्र प्राप्स्यते शर्म तस्य तत्वं नृशेमुषी ।
तन्वीदानींतनी सम्यग् अवगन्तुं न शक्ष्यति ॥१७६॥
जन्मान्धः पूरुषो यद्वत् पीतश्यामाद्यदर्शनात् ।
तत्तद्वर्णप्रभेदं न बोद्धुं श्रुत्वा ऽपि शक्नुयात् ॥१७७॥
ईषत्तु शास्त्रतो विघ्नः स्वर्गे ईश्वरसेवनात् ।
तन्माहात्म्येक्षणाच्चैव तत्प्रेम्णश्च भयान्वितात् ॥१७८॥
स्वःस्थस्य सङ्गमाच्चापि नृगणस्यामलात्मनः ।
नानाज्ञानप्रवृद्धेश्च सुखं दिव्यं भविष्यति ॥१७९॥युग्मं॥
अपूर्वशर्मलिप्सोस्तु स्वभावस्यामलत्वतः ।
स्वर्लोके कामजानन्दं को ऽपि नाभिलषिष्यति १८०॥
इत्यादिफलसंयुक्ता स्वर्ग्या मुक्तिरनन्तिका ।
श्रीख्रीष्टस्यार्जिता मृत्या याच्या शिष्येश्वराद् दृढं ॥१८१॥
कांक्षामाशां च मर्त्यानामतिशर्मैषिणामपि ।
सांसारिकैस्त्वतृप्तानां विषयैः सैव तर्पयेत् १८२॥
नमुक्तिर्गम्यते यैस्तु तेषां दण्डो भयंकरः ।
घोरायां दुर्गतौ भयस्ताडितानां सनातनं ॥१८३॥
स्थाने भयानके तस्मिन्नुग्रपीडाऽन्विते ऽक्षये ।
यथा नो त्वं पतेरीशात् प्रार्थयस्व तथा क्षमां ॥१८४॥
नृजातित्रातरि श्रद्धां कुर्वाणश्च दयामये ।
श्रीखृष्टेऽघक्षमां प्राप्तुं तद्द्वारा प्रार्थनां कुरु ॥१८५॥

फलं हि खृष्टसिद्धस्य त्राणस्याखिलवंशजैः ।
मनुष्यैः शक्यते लब्धुं पापघ्नं नित्यशर्मदं ॥१८६॥
न को ऽपि मानवो जातिविशेषादिकहेतुना ।
तन्मतालम्बनोत्पन्नफलानंशो भवत्यपि ॥१८७॥

॥ शिष्य उवाच ॥

नरैश्चेत् सर्वदेशीयैर्ग्राह्यमासीदिदं मतं ।
कथं न सृष्टिकाले तदाविश्चक्रे परेश्वरः ॥१८८॥
कथं च तत्क्षणादेव तन्मतस्य प्रचारणं ।
स भूमेः सर्वजीवृत्सु न चक्रे सर्वशक्तिमान् ॥१८९॥

॥ गुरूरुवाच ॥

मतं यत् स्थापितं शिष्य प्रमाणैर्न्यायिभिर्दृढैः ।
नेदृग्भिः संशयैः शक्या खंडितुं तस्य सत्यता ॥१९०॥
सत्यं यदीश्वरेणास्मान्नीत्यै प्रादुष्कृतं मतं ।
तत् तस्य दयया जातं नाधिकारश्च तत्र नः ॥१९१॥
ईशस्य कृपयेदृश्या चासंतुष्टा वयं यदि ।
ब्रूमः कथं मतं नादावीशस्तत् प्रोक्तवानिति ॥१९२॥
तदा किं शिष्य नास्माकं प्रतिभात्यकृतज्ञता ।
वरस्यैशस्य विषये विवादं कुर्वतां वृथा ॥१९३॥ युग्मं॥
त्वत्संशयस्य दत्तानि बुधैर्यान्युत्तराणि तु ।
तन्मध्ये कथयिष्यामि किञ्चिच्छिष्य समासतः ॥१९४॥

निष्पापो निर्मलश्चासीदाद्यो ना मृष्ट्यनेहसि ।
तदा न खृष्टसिद्धेन त्राणेनासीत् प्रयोजनं ॥१९५॥
यत्काले त्वीश्वरस्याज्ञामतिक्रम्य दुदोष ना ।
तदैवागामिनस्त्रातुरीशश्चक्रे प्रतिश्रवं ॥१९६॥
चिरे काले गते खृष्टश्चाविर्भूतोऽपि भूतले ।
तथाप्यादौ प्रतिज्ञात ईश्वरेण तदागमः ॥१९७॥
तस्मान्न स्यान्निराकार्य्यं नूत्नत्वात् खार्ष्टकं मतं ।
तच्चादावप्यभिप्रेत्याविश्चक्रे तत्परं विभुः ॥१९८॥
कः कालस्त्वभवद् योग्यः प्रादुष्कारार्थमीश्वरः ।
न त्वन्यः कोऽपि निर्णेतुं सम्यक् शक्नोति वस्तुतः ॥१९९॥
यस्मिन् कालविशेषे तु श्रीखृष्टोऽवातरद्भुवि ।
तस्य कालस्य योग्यत्वं भाति वक्तव्यहेतुभिः ॥२००॥
मनुष्याः प्राक्तना अज्ञा अविद्याश्चाभवन्निति ।
विदन्ति प्रत्नकालीनपुरावृत्तविदो बुधाः ॥२०१॥
विद्यां तु क्रमशः प्राप्य श्रीखृष्टोऽवातरद्यदा ।
तदाऽतिपंडिता आसन् विख्याता यवनादयः ॥२०२॥
यदाऽज्ञानाः स्थिता मर्त्याश्चेत् खृष्टोऽवातरत्तदा ।
तद्विपक्षास्तदा किं न तस्मिन्क्कंकामकुर्वत ॥२०३॥
ईशेन वस्तुतो नुन्नो सोऽथवा लोकवंचकः ।   [युग्मं
प्राचीनमानुषाज्ञत्वान्नहि भातीति वादिनः ॥२०४॥
यदा तु कोविदा जाताः सत्यासत्यपरीक्षणे ।
नरास्तत्समये योग्ये श्रीखृष्टोऽवातरद् भुवि ।२०५॥

तस्माच्च पण्डितैः सुष्ठु तच्चरित्रे परीक्षिते ।
न शक्यः संशयः कर्तुं तत्क्रियाः कल्पिता इति ॥२०६॥
अन्यच्च यज्जगत्सृष्टेः पश्चात् काले गते चिरे ।
श्रीखृष्टोऽवातरत् तत्र प्रतिभाति फलान्तरं ॥२०७॥
श्रीखृष्टात् प्राग् य उत्पेदे भव्यवक्तृगणे भुवि ।
महानृतारकं भव्यं स प्रोवाचेशशिक्षितः ॥२०८॥
तस्माद् यदाऽऽगतः खृष्टो भव्यवाक्यानुसारतः ।
तद्भव्यवाक्प्रमाणात् स ईशनुन्नो विनिश्चितः ॥२०९॥
मनुष्ये त्वादिमे भ्रष्टे तत्क्षणाच्चेदवातरत् ।
खृष्टस्तदाऽभवन् नष्टं प्रमाणं भव्यवक्तृजं ॥२१०॥
तदा हि भव्यवक्तृणामनुत्पन्नत्वतो भुवि ।
यद् भव्यज्ञवचोजातं प्रमाणं तद्धि नाभवत् ॥२११॥
पुनश्च यद् विलम्बेन खृष्टधर्म्मः प्रचारितः ।
तस्माज् ज्ञातस्तदुत्कर्षस्तदपेक्षाप्यजायत ॥२१२॥
अनेके यावनाद्या हि बुधाः प्राक् तत्प्रचारणात् ।
सन्मार्गपरलोकादितत्त्वं गन्तुममार्गयन् ॥२१३॥
तेषां च मतभिन्नत्वात् सर्वथा चाप्यनिश्चयात् ।
ऐशीं नीतिं विनाऽगम्यं सत्यमित्यविदन् जनाः ॥२१४॥
आसीच्चेत् खार्ष्टको धर्मस्त्वादावेव प्रचारितः ।
तदाऽबुध्यन् कथं मर्त्याः स्वस्या दुर्बलतां धियः ॥२१५॥
मुहुर्मुहुस्तु सन्मार्गमार्गणे पंडितैः कृते ।
भ्रमद्भिस्तैस्तु नावाप्ते विश्वासार्हे पथि क्वचित् ॥२१६॥

तदैव पण्डितैरैशनीत्यावश्यकता मता ।
सद्भिश्च ख्रीष्टधर्मस्य कृताऽपेक्षा विचारिभिः ॥२१७॥युग्मं॥
धर्मश्च ख्रार्ष्टकः सद्यो नोदितः सर्वभूतले ।
इत्थं द्वितीयिका शंका शृणु शिष्य तदुत्तरं ॥२१८॥
यथार्थामर्च्चनां स्वस्य प्रत्नमर्त्येभ्य ईश्वरः ।
दयालुर्ज्ञापयामास तच्छुभेच्छुर्मुहुर्मुहुः ॥२१९॥
विहाय त्वीश्वरस्यार्च्चां प्रायशो भ्रान्तमानसाः ।
अर्केन्दुभादिपूजां ते ईशानिष्टां समाचरन् ॥२२०॥
ख्रीष्टो नृतारकः स्वर्गं चारुरोह पुनर्यदा ।
तदा तद्धर्मवृत्तान्तो बहुदेशेष्वघोष्यत ॥२२१॥
श्रोतारश्चाखिला यन् न तमगृह्णन् मुदा तदा ।
तन्मोढ्यमेव हेतुः स्यात्तत्र नान्यच्च किंचन ॥२२२॥
तत्तद्देशेष्वनेके तु तं मनुष्याः समाश्रयन् ।
लोपश्च प्रत्नधर्म्माणामभूद् देशेषु केषुचित् ॥२२३॥
यद् भूमेः सर्वनीवृत्सु ख्रार्ष्टधर्मप्रचारणं ।
प्रागेव नो कृतं सम्यक् तत्र को वेद कारणं ॥२२४॥
यत् काले यत्प्रकारेण यद्यदिस्तिवच्छतीश्वरः ।
तदा तथा स तद्दत्ते नाधिकारश्च तत्र नः ॥२२५॥
दरिद्रो यश्चिरं स्थित्वा शेषे प्राप्नोति सम्पदं ।
स तद्विलम्बलब्धत्वात् तामग्राह्यां न मन्यते ॥२२६॥
तद्वच्च यैर्विलम्बेन विज्ञातं ख्रार्ष्टकं मतं ।
ते नार्हन्ति निराकर्त्तुं गृहीतुं तु मुदैव तत् ॥२२७॥

न कार्य्यः संशयः शिष्य विषये ऽत्र त्वयेदृशः ।
जनैर्हि सर्वदेशीयैर्ग्राह्यं खृष्टीयकं मतं ॥२२८॥
गरीयान् पापरूपो हि रोगो व्याप्नोति भूतलं ।
प्रतीकारेण सर्वेषां नृणां चास्ति प्रयोजनं ॥२२९॥
श्रीयेषूखृष्टसिद्धान्तु प्रायश्चित्ताद्विना नहि ।
एनोरोगप्रतीकारो ऽस्तीतरो भूमिमण्डले ॥२३०॥

इति मतपरीक्षायां खृष्टीयमतप्रमाणप्रदर्शनं
नाम पंचमो ऽध्यायः ॥५॥

॥ शिष्य उवाच ॥

श्रीखृष्टे प्रत्ययः कार्य्यः सर्वैस्त्राणेच्छुभिर्नरैः ।
इत्थं भवन्मुखात् स्पष्ट उपदेशः श्रुतो गुरो ॥ १ ॥
प्रोक्तानां त्वृषिभिः प्रत्नैः पूजितानाञ्च भारते ।
वेदस्मृत्यादिशास्त्राणामीशोक्तत्वं न वेत्सि किं ॥ २ ॥
तच्छास्त्रादिष्टमार्गेण प्रचलन्तः परम्परं ।
प्रतीक्षन्ते ऽत्रदेशीयाः श्रद्दधानाः परम्पदं ॥ ३ ॥
प्रत्याशां किमिमां तेषां विफलां मन्यते भवान् ।
न वेत्ति संशयच्छित्यायुपदेष्टुं गुरो ऽर्हसि ॥ ४ ॥

॥ गुरुरुवाच ॥

यं त्वत्प्रश्नोत्तरं वक्ष्ये विस्तरात् सुविचार्य्य ते ।
तं शृणवपक्षपातेन सत्यमार्गेच्छया ऽपि च ॥५॥

अशेषा मानुषाः प्रायो विद्यन्ते पक्षपातिनः ।
स्वशैशवावधीष्टेषु विषयेषु रता दृढं ॥६॥
यस्तु ना सत्यमात्रार्थी सर्वस्वार्थानपेक्षया ।
स एव केवलः शिष्य बुधोऽस्ति वास्तवः स्मृतः ॥७॥
त्वत्पृष्टविषये तस्माद् वक्ष्यमाणं मयोहनं ।
गृहाण शरलो भूत्वा त्यक्तधीदृष्टिबाधकः ॥८॥
शास्त्रे च मानवे प्रोक्तमुपदेशं स्मरन्नहं ।
चेष्टिष्ये मृदुभिर्वाक्यैराविष्कर्तुं स्वमाशयं ॥९॥

तथाच मानवे शास्त्रे द्वितीयाध्याये श्लोकः १५९

अहिंसयैव भूतानां कार्य्यं श्रेयोऽनुशासनं ।
वाक् चैव मधुरा श्लक्ष्णा प्रयोज्या धर्ममिच्छतेति ॥

वचस्तु चेत्प्रतीयेत कुचिन् मामकमप्रियं ।
त्वं मा मन्यस्व निन्दोत्थमाशयस्य वशात्तु तत् ॥१०॥
गुणान् हि विविधान् वेद्मि भारतीयविपश्चितां ।
तेषां यच्चाप्रियं ब्रूयां संतप्तः स्यां ततो भृशं ॥११॥
सत्यासत्याध्वनोर्येन विवेकस्तु भवेत् स्फुटः ।
वक्तव्यं तन् मया सर्वं निह्नोतुं च न शक्यते ॥१२॥
भारतीयेषु वेदादिशास्त्रेषु प्राप्यते न वा ।
चिह्नद्वयं तु मत्प्रोक्तमिति देक्ष्यामि साम्प्रतं ॥१३॥
प्रमाणं प्रमथं सत्यशास्त्रस्याद्भुतसाधिका ।
शक्तिः प्रवर्त्तके तस्य स्थिता स्पष्टत्यवादिषं ॥१४॥
इत्यादिलक्षणाभावाद् यानि शास्त्राणि भारते ।
मतानि तानि नैशानि ज्ञातव्यानीति मे मतिः ॥१५॥

Digitized by Google

॥ शिष्य उवाच ॥

किमत्रत्येषु शास्त्रेषु भूयो नो प्राप्यते गुरो ।
चित्रो देवादिसिद्धानां वृत्तान्तोऽद्भुतकर्मणां ॥१६॥

॥ गुरुरुवाच ॥

ये वर्तन्ते पुराणेषु वृत्तान्ता दैवकर्मणां ।
नास्माभिः प्रत्ययस्तत्र कार्य्योऽकृत्वा परीक्षणं ॥१७॥
यैर्लिङ्गैः परिचीयेरन् कथाः सत्यास्तथाऽनृताः ।
चतुर्थे तेऽध्यये तानि विस्तरात् प्रोक्तवानहं ॥१८॥
भवन्त्यसंभवा येषु प्रबन्धेषु स्थिताः कथाः ।
तेषां सुसावधानेन परीक्षा कर्तुमर्हति ॥१९॥
न श्रूयन्ते न दृश्यन्ते कृता आधुनिकैर्नरैः ।
क्रियाः कुत्रापि लोकेऽस्मिन्नतिमानुषशक्तिजाः ॥२०॥
न क्वाप्याविष्कृतो देव इदानीं भूमिमंडले ।
भीमैर्विस्मापयत्यस्मान् स्वचमत्कारकर्मभिः ॥२१॥
तस्माच्च प्रत्नकालीना याः कीर्त्यंतेऽद्भुतक्रियाः ।
कृतास्तास्तत्वतः सर्वा नवेति प्रष्टुमर्हति ॥२२॥
या याः प्रमाणहीनाश्च प्रकीर्त्यन्तेऽद्भुतक्रियाः ।
प्रमाणाभावतः सर्वा अप्रत्येया भवन्ति ताः ॥२३॥
कृता याः साक्षिणां साक्षात् साक्षिभिश्च परीक्षिताः ।
वार्त्ता च लिखिता यासां सद्यो लोके च कीर्त्तिताः ॥२४॥

क्रियास्ता एव विश्वास्यास्तथ्याश्च प्रतिभांति मे ।
शक्तिश्च तादृशी येषां तेष्वैशं शास्त्रमर्पितं ॥२५॥युग्मं॥
किन्तु याः साक्षिणां साक्षान् नाक्रियन्ताद्भुतक्रियाः ।
वार्त्ता च सकला यासामादौ ग्रन्थेषु नार्प्यत ॥२६॥
तास्ता अनिश्चिताः सम्यक् संशयार्हाश्च सर्वशः ।
प्रायश्च कल्पिता इत्थं निर्णयोऽस्तीह शिष्य मे ॥२७॥
या अत्रत्येषु शास्त्रेषु कीर्त्तिता अद्भुतक्रियाः ।
न तासु प्रत्ययः कार्य्यो मन्ये शिष्य मनीषिभिः॥२८॥
तासां हि वर्णनं येषु प्रबंधेषु प्रशस्यते ।
ते काव्यरूपका भान्ति तद्वार्त्ताश्चाप्यसंभवाः ॥२९॥
कस्मिंश्च तत्प्रबन्धानां रचना समये कृता ।
तदर्थकाव्यरूपत्वाद् विनिर्णेतुं न शक्नुमः ॥३०॥
वार्त्ताश्च तत्रवर्त्तिन्यः साक्षिणां गोचरे कृताः ।
ग्रन्थेषु चार्पिता सद्य इति नैव प्रतीयते ॥३१॥
अतोऽद्भुतक्रियाशक्तेः प्राक्तनेष्वृषिषु स्थितिः ।
शास्त्राणाञ्चेश्वरोक्तत्वं विनिश्चेतुं न शक्यते ॥३२॥
प्रत्युतानिश्चयात् तस्मात् प्रमाणाभावतोऽपि च ।
मुनिव्रजोक्तशास्त्राणि नैश्वराणीति भाति मे ॥३३॥
प्रष्टॄणां संशयच्छित्त्यै प्रमाणानि हि यस्य न ।
शास्त्रस्य सन्ति तच्छास्त्रमैशं नास्तीति तर्क्यते ॥३४॥
ईशो हि स्वस्य शास्त्रस्य निश्चयार्थमनेकधा ।
प्रमाणानि प्रदातुं नः शक्नोत्यत्र न संशयः ॥३५॥

॥ शिष्य उवाच ॥

एतद्देशीय शास्त्रस्थान् वृत्तान्तान् देवकर्मणां ।
भवान् अनिश्चितान् प्रायःकाव्यरूपांश्च मन्यते ॥३६॥
भावत्को निर्णयस्त्वेष यथार्थो विद्यते नवा ।
इति ज्ञानाय शास्त्राणां तत्वं शुश्रूष आदितः ॥३७॥

॥ गुरूवाच ॥*

अत्रत्येभ्यो ऽन्यशास्त्रेभ्यो विद्यते प्राक्तना श्रुतिः ।
श्रवणाच्छ्रुतिराख्याता पूर्वाचार्य्यमुखाच्छ्रुना ॥३८॥
आदौ हि श्रौतमंत्राणां ब्राह्मणानां च संहिता ।
नासीदलिखिता आसन् मंत्राद्यास्तु पृथक् पृथक् ॥३९॥
पश्चात्तु प्राक्तनः कश्चित् संचीयाग्रन्थयद् बुधः ।
तान् सर्वान् रचनातश्च वेदव्यास इति स्मृतः ॥४०॥
तत् प्राक्कालीनवार्तायास्तत्वं कालात्ययाद् वयं ।
वितर्केणानुमामो वै निश्चेतुं तु न शक्नुमः ॥४१॥
मंत्रास्तु प्रायशोऽग्नीन्द्रसूर्यादिस्तवरूपकाः ।
विद्यन्ते उपदिष्टस्तु ब्राह्मणेषु विधिक्रमः ॥४२॥
निवृत्ते प्रायशः पाठे पूजितााया अपि श्रुतेः ।
तथा निरुक्तशब्देषु तत्र भूरिषु सत्सु च ॥४३॥

---

* एतस्मिन् स्थाने स्थानान्तरेषु च एतद्ग्रन्थकर्त्तृकृताया इतिहास दीपिकायाः केचिच् श्लोका अवतीर्य्यन्ते ॥

विप्रा आधुनिकाः प्रायस्तदर्थज्ञा भवंति न ।
न वा तद्विध्यनुष्ठानं पूर्ववत् कुर्वते जनाः ॥४४॥ युग्मं॥
या वेदवर्तिनी भाषा सा शनैर्विकृता भवत् ।
शास्त्रीयाऽऽधुनिका भाषा चान्यरूपा प्रतीयते ॥४५॥
ग्रन्थेषु नार्पिता आसन् वेदाः प्राक् श्रुतिरूपकाः ।
ऐतिह्येन तु सम्प्राप्ता इति शिष्य मयोदितं ॥४६॥
तस्माद् यैः प्रोदिता मंत्रा ब्राह्मणानि च शास्त्रिभिः ।
नास्माभिः शक्यते ज्ञातुं तद्वृत्तान्तो यथातथः ॥४७॥
मंत्राणामुक्तिकालं च तद्वज् ज्ञातुं न शक्नुमः ।
वार्ता तु विद्यते तेषां घनध्वान्तसमावृता ॥४८॥
अतस्ते मंत्रवक्तार आसन्नीश्वरचोदिताः ।
आश्चर्यकर्मकर्तारश्चेति स्यान्निश्चयः कथं ॥४९॥

॥ शिष्य उवाच ॥

वेदानामीश्वरोक्तत्वे गुरो शंका भवेत् कथं ।
किं तान्न प्रोक्तावान् ब्रह्मा स्वयं सृष्टेरनेहसि ॥५०॥

॥ गुरुरुवाच ॥

नैकस्मिन् समये वेदाः संपूर्णाः प्रोदिताः सकृत् ।
मंत्रा भिन्नास्तु भिन्नेषु कालेषूक्ताः पृथक् पृथक् ॥५१॥
ऋग्यजुरादिवेदानामनुक्रमणिकासु हि ।
तत्तन्मंत्रप्रवक्तॄणामभिख्या लिखिताः स्थिताः ॥५२॥

विद्यन्तेऽग्न्यादिदेवानां स्तवा मंत्रेषु केषुचित् ।
स्थिता च केषुचिद् राज्ञामुदाराणां गुणस्तुतिः ॥५३॥
सृष्टेः कालात् परं तत्तद्भूपालानां समुद्भवात् ।
ऊहे तत्स्तोतृमंत्राणां सृष्टेः पश्चात् समुद्भवं ॥५४॥
क्रिया बह्व्यश्च लौकिक्यः संग्रामाद्या इतस्ततः ।
कीर्त्यंते श्रौतमंत्रेषु तथा संज्ञाश्च भूभुजां ॥५५॥

यथा ऋग्वेदीयप्रथमाष्टकस्य चतुर्थाध्याये उक्तं
त्वमाविथ नर्यं तुर्वशं यदुं त्वं तुर्वीतिं वय्यं शतक्रतो ।
त्वं रथमेतशं कृत्व्ये धने त्वं पुरो नवतिं दंभयो नवेति ॥

क्वचिच्चोपनिषत्स्वेवं कीर्तनाद् रामकृष्णयोः ।
श्रुतेः केषांचिदंशानां तर्कयामि नवीनतां ॥५६॥
कृष्णो हि देवकीसूनुश्छांदोग्ये कीर्त्यते किल ।
रामचंद्रस्तथा रामतापनीये च वर्ण्यते ॥५७॥

तथाच छांदोग्योपनिषदस्तृतीये किंवा पंचमे प्रपाठके उक्तं ॥
अथ यत्तपोदानमार्जवमहिंसा सत्यवचनमिति ता अस्य दक्षिणा स्तस्मादाहुः सोष्यत्यसोष्टेति पुनरुत्पादनमेवास्य तन्मरणमेवावभृथ स्तद्धै तद् घोर आंगिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाचापिपास एव स बभूव सोऽन्तवेलायामेतत् त्रयं प्रतिपद्येताक्षितमस्यच्युत मसि प्राणसंशितमसीति तत्रैते द्वे ऋचौ भवतः

किंच रामतापनीयश्लोकेषु तद्वदुक्तं
ओं नमोऽथर्ववेदाय रामभद्रस्वरूपिणे ।
चिन्मयेऽस्मिन्महाविष्णौ जाते दाशरथौ हरौ ॥
रघोः कुलेऽखिलं राति राजते यो महीस्थितः ।
स राम इति लोकेषु विद्वद्भिः प्रकटीकृतः ।

राक्षसा येन मरणं यांति स्वोद्रेकतोऽथवा ।
रामनाम भुवि ख्यातमभिरामेण वा पुनः ॥
राक्षसान् मर्त्यरूपेण राहुर्मनसिजं यथा ।
प्रभाहीनांस्तथा कृत्वा राज्यार्हाणां महीभृतां ॥
धर्ममार्गं चरित्रेण ज्ञानमार्गं च नामतः ।
तथा ध्यानेन वैराग्यमैश्वर्य्यं स्वस्य पूजनात् ॥
तथा रात्यस्य रामाख्या भुवि स्यादथ तत्त्वतः ।
रमन्ते योगिनोऽनन्ते नित्यानन्दे चिदात्मनि ॥
इति रामपदेनासौ परब्रह्माभिधीयते ।
चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिण

इत्यादिना

त्रेतायां तूदभूद रामः कृष्णश्च द्वापरे तथा ।
इत्यत्रत्येषु शास्त्रेषु प्रायः सर्वत्र संमतं ॥५८॥
भूपौ तु यत्र कीर्त्त्येते त्रेताद्वापरसंभवौ ।
तच्छास्त्ररचना सृष्टिसमये सम्भवेत् कथं ॥५९॥
श्रौता मंत्रादयश्चापि ये सर्वापेक्षयाऽऽदिमाः ।
ते सृष्टिसमये नोक्ता वस्तुतस्तु कलौ युगे ॥६०॥
तस्मात्ते वैदिका मंत्रा न ज्ञेया ब्रह्मणोदिताः ।
भिन्नैस्तु भिन्नकालेषु कृताः कार्य्यवशाद् बुधैः ॥६१॥
श्रुतिश्च युगपन्नोक्ता संपूर्णा सृष्ट्यनेहसि ।
क्रमेण प्रोदिता त्वित्थं तत्प्रमाणान्तरं शृणु ॥६२॥
ज्ञाते शास्त्रीयभाषाया रूपे द्वे तद्विचारिभिः ।
श्रौतञ्चाधुनिकञ्चैव भेदयुक्ते परस्परं ॥६३॥

तयोर्विभक्तिषु स्पष्टं वैलक्षण्यं प्रतीयते ।
प्रायश्च शास्त्रवेत्तारः श्रौतीं भाषां न जानते ॥६४॥

॥ यथा वैदिकं रूपं ॥

वायवायाहि दर्शतेमे सोमा अरंकृताः तेषां पाहि श्रुधी हवं ॥

॥ आधुनिकं च रूपं ॥

वायवायाहि दर्शनीयेमे सोमा अलंकृताः तेषां पाहि शृणु हवं ।

या भाषा वैदिकी चासौ नानाभाषासुवेत्तृभिः ।
बुधैः शास्त्रीयभाषाया मता सा रूपमादिमं ॥६५॥
तस्यां वाण्यां तु पूर्वस्यां संस्कृतायां क्रमात् क्रमात् ।
शेषे याऽऽधुनिकी भाषा सोद्भूत् सुपरिष्कृता ॥६६॥
भाषायाश्चादिमं रूपमुक्तं यत् सांप्रतं मया ।
तेन प्रायोऽखिला मंत्रा विशिष्यन्ते हि वैदिकाः॥६७॥
किन्तु कुचित् कुचिन् मंत्रे तथैवोपनिषत्सु च ।
नूत्नं शास्त्रीयभाषाया रूपं कासुचिदीक्ष्यते ॥६८॥
यस्मिंश्च वैदिके मंत्रे यासु चोपनिषत्सु हि ।
रूपं शास्त्रीयभाषाया नूत्नमेव प्रतीयते ॥६९॥
ते ते मंत्रादयो नूत्ना निर्णीयन्ते विचारिभिः ।[युग्मं॥
न चान्यमंत्रवत् प्रत्नाः प्रतिभान्तीति बुध्यतां ॥७०॥
अतः सृष्टेः परं काले चिरेऽतीते क्रमात् क्रमात् ।
प्रोच्यन्त पण्डितैर्वेदा नात्र मे भाति संशयः ॥७१॥

॥ शिष्य उवाच ॥

या भाषा वैदिकी यत्र लौकिकं संस्कृतं तयोः ।
समानप्रत्नतां किं न सम्मन्यन्ते विपश्चितः ॥७२॥
तस्मात् केन प्रमाणेन निश्चिनोति भवान् स्फुटं ।
प्रत्नत्वं श्रौतभाषाया लौकिक्यास्तु नवीनतां ॥७३॥

॥ गुरुरुवाच ॥

मनुष्याः सर्वदेशीया रीतिभाषादिषु क्रमात् ।
विकारं यान्ति तज्ज्ञातं पुरावृत्तसुवेत्तृभिः ॥७४॥
तस्माद् ये प्राक्तना ग्रन्था ये च नूत्नतरास्ततः ।
तत्तद्भाषीयरूपस्य भेदः सर्वत्र दृश्यते ॥७५॥
भाषा हि यावनी प्रत्ना भाषा अन्याश्च भूरयः ।
स्थिता असंस्कृताः पूर्वं सिद्धिं प्रापुः शनैः शनैः ॥७६॥
तद्वत्रात्रत्यशास्त्रीयभाषापि प्रागसंस्कृता ।
प्रसर्पति स्म संस्कारमित्येतत् तर्कयाम्यहं ॥७७॥
अन्यच्च युगपद् वेदाश्चेत् कार्त्स्न्येनोदिताः सकृत् ।
तद्भाषाभिन्नरूपत्वे हेतुं तर्हि ब्रवीषि कं ॥७८॥
संपूर्णा युगपद् वेदा ब्रह्मणा प्रोदिता यदि ।
भाषायाः सर्वथा साम्यं सर्वत्रैव तदा भवेत् ॥७९॥
शास्त्रे मंत्रादिसंवेत्तुर्व्याससाख्यस्य च या कथा ।
स्थितास्त्यनिश्चिता सम्यक् साप्ययुक्ता च भाति मे ॥८०॥
अतस्तस्मिन् स्थिता व्यासे शक्तिरद्भुतकर्मणां ।
ऐश्वं शास्त्रं च निहितमित्येतन् नैव निश्चितं ॥८१॥

॥ शिष्य उवाच ॥

श्रुतिश्चेन् नेश्वरोक्ताऽस्ति व्यासश्चेन् नेशचोदितः ।
तदा परम्परं धीरैस्तत्प्रामाण्यं मतं कथं ॥८२॥

॥ गुरूरुवाच ॥

तव प्रश्नोत्तरं वक्ष्ये समाप्ते शास्त्रवर्णने ।
वृत्तान्तो ह्यन्यशास्त्राणां वक्ष्यमाणोऽवशिष्यते ॥८३॥
महाभूतार्चनामादौ प्रायो मान्यच्च पूजनं ।
जना आचेरूरत्रत्या इति वेदात् प्रतीयते ॥८४॥
पश्चात् तु त्रीन् गुणान् भिन्नानीश्वरस्य विपश्चितः ।
प्रकल्प्योचुस्तदुत्पन्नान् विश्वसृष्टिस्थितिक्षयान् ॥८५॥
स्रष्टारं वेधसं देवं पातारं च तथा हरिं ।
संहर्त्तारं शिवं चेति संमत्यापूजयन् बुधाः ॥८६॥
तत्त्वं च विष्टपोत्पत्तेरविज्ञाय बहूनि ते ।
रूपाणि कल्पयामासुः प्रकृतेः पुरूषस्य च ॥८७॥
नानारूपान्विताः शक्तीर्नामारूपेश्वरस्य च ।
प्रकल्प्य मेनिरे तासां द्वारा सृष्ट्यादिसाधनं ॥८८॥
विकारं क्रमशः प्राप्ते मतेऽत्रत्ये तु शास्त्रिणः ।
वृन्दे प्रावेशयञ्छूरान् सज्जनांश्च दिवौकसां ॥८९॥
इत्थं च रामकृष्णाद्या गुणैः स्वैर्विश्रुता नराः ।
अत्युक्त्या मगधादीनामारोहन् देवतापदं ॥९०॥

इदानीं भारते प्रायो निवृत्ता वेधसोऽर्चना ।
पूजा तु विष्णुशिवयोः क्रियते तत्तदेष्टृभिः ॥९१॥
अनेकरूपिणीनां च देवीनामर्चनां जनाः ।
अत्रत्याः कुर्वते भक्त्या दुर्गायास्तु विशेषतः ॥९२॥
अत्रत्यदेवपूजाया न मन्तव्याऽऽदितः सदा ।
एकस्मिन् संस्थितीरूपे विकारस्तु निरन्तरः ॥९३॥
श्रुतिमादौ पुराणानि चानुजग्मुस्ततो जनाः ।
अनेकास्त्वधुना तन्त्राण्यऽनुयांति श्रुतित्यजः ॥९४॥
तत् सर्वशास्त्रकर्तॄणां वृत्तान्तो वास्तवोऽधुना ।
न सम्यक् शक्यते ज्ञातुं कविकल्पनमिश्रणात् ॥९५॥
समस्तेषु पुराणेषु पुरावृत्तं यथातथं ।
न क्वापि वर्ण्यते शिष्यासम्भवार्थैस्तु मिश्रितं ॥९६॥
तथा रामायणे प्रोक्ताः प्रबन्धाः सहभारते ।
न सम्यग् वास्तवा ज्ञेयाः कविशक्त्या त्वलङ्कृताः॥९७॥
सर्वे पुराणवक्तारो वचांस्यात्मोदितानि हि ।
वदंत्यैतिह्यलब्धानि न तु प्रत्यक्षदर्शनात् ॥९८॥
अतो यास्तत्र वर्त्तते चित्रार्थाः सकलाः कथाः ।
तासां वै तात्विकी वार्त्ता क्रमशो विस्मृताऽभवत् ॥९९॥
तथाच मूलवृत्तान्तोऽद्भुतपुञ्जसमावृतः ।
यकारि सर्वशः शिष्य सम्यङ्नष्टादिमार्थकः ॥१००॥
कस्मिंश्च रचना भूता पुराणानामनेहसि ।
कर्त्तारो वास्तवाः केचेत्येतन्नैव प्रतीयते ॥१०१॥

न पंचलक्षणानाञ्च प्राक्तने समये ऽभवत् ।
सर्वेषां रचना किन्तु केषांचित् काल उत्तरे ॥१०२॥
यथा भागवतब्रह्मवैवर्त्ताख्ये विशेषतः ।
सुप्राचीने न मंतव्ये नूतने तु विचारिभिः ॥१०३॥
अतः पुराणसंस्थानां वृत्तान्तानामनिश्चयात् ।
विद्वांसः प्रत्ययं तत्र कर्त्तुं नार्हन्ति कर्हिचित् ॥१०४॥
तथाचात्रत्यशास्त्रोक्ते प्राक्तनर्षिगणे स्थितिः ।
चमत्कारक्रियाशक्तेर्विनिश्चेतुं न शक्यते ॥१०५॥
तदद्भुतक्रियाशक्तेः प्रमाणाभावहेतुना ।
तदीशचोदितत्वे ऽपि दृढा शंका प्रजायते ॥१०६॥
अतो ऽत्रत्यानि शास्त्राणि न भान्तीशोदितानि मे ।
मर्त्यैस्तु कल्पितान्येव स्वीयधीकौशलात् स्वयं ॥१०७॥
न केवलं तु धर्मं स्वमैशमाहुर्मनीषिणः ।
अत्रत्याः किन्तु विद्याः स्वा अपि दैवीः प्रचक्षते ॥१०८॥
न मर्त्यकौशलोत्पन्नमाहुर्व्याकरणं बुधाः ।
दैवीं तु चक्षते विद्यां मुनिपाणिनिनोदितां ॥१०९॥
न तु तस्य प्रदानाय मुनेरासीत् प्रयोजनं ।
स्वयं हि मानुषा विद्यामेनां स्त्रष्टुमशक्नुवन् ॥११०॥
आरवीयाख्यभाषा हि बह्वो भाषास्तथा ऽपराः ।
मुन्युक्ता नैव मन्यन्ते पण्डितैः संस्कृता अपि ॥१११॥
अज्ञातोत्पत्तिकालीना यास्तु विद्याश्चिरन्तनाः ।
ता आर्षीरेव देशे ऽस्मिन् वावद्यन्ते विपश्चितः ॥११२॥

विद्यास्तु शिष्य यावत्य आद्रियन्ते ऽत्र तावतीः ।
ससर्ज मानुषी बुद्धिर्नतूवाच मुनिव्रजः ॥११३॥
एतद्देशीयविद्यानामैशोत्पत्तिर्यथा बुधैः ।
न मन्तव्या तथा ऽत्यो धर्मो न ज्ञेय ईश्वरः ॥११४॥

॥ शिष्य उवाच ॥

एतद्देशीयशास्त्राणि न भवन्त्यैश्वराणि चेत् ।
तत्प्रामाण्यं तदा मर्त्या मन्तुमारेभिरे कथं ॥११५॥

॥ गुरुरुवाच ॥

मन्यन्ते सत्वमीशस्य नराः प्रायः स्वभावतः ।
जनाश्च सर्वदेशीया माहात्म्यात् तस्य बिभ्यति ॥११६॥
पूजायै हीश्वरो मर्त्यान् स्वकीयायै प्रचोदयन् ।
सर्वेषां निदधौ हृत्सु स्वस्य भीतिं निसर्गतः ॥११७॥
तस्माच्च निखिला मर्त्या भिन्नरीतिधरा अपि ।
ईशस्य देवतानां वा ऽऽराधनामाचरन्ति वै ॥११८॥
प्राक् काले ईश्वरस्यार्च्चा यथार्था प्राचलद् भुवि ।
तत् काले हीश्वरो मर्त्यान् स्वस्य पूजामुपादिशत्॥११९॥
पश्चात्तु मानुषा मौढ्याद् विकार्य्यैश्वरपूजनं ।
सूर्य्याद्याराधनां तस्मिन् भ्रान्तस्वान्ता अमिश्रयन्॥१२०॥
विकारात् प्राङ् मतं स्वीयं यथैशं मेनिरे जनाः ।
तद्वत् तद्विकृतेः पश्चादपि मेनिर ईश्वरं ॥१२१॥

तस्माद् वेदादिशास्त्राणि नरधीकल्पितान्यपि ।
जनाः प्रचक्रिरे मन्तुं पुण्यानीशोदितानि च ॥१२२॥

॥ शिष्य उवाच ॥

यथार्थामीश्वरस्यार्च्चामीशादिष्टां कथं नराः ।
विचक्रुर्भ्रामितास्तन् मे गुरो ब्रूहि समासतः ॥१२३॥

॥ गुरुरुवाच ॥

अर्कादितेजसा मर्त्या उज्ज्वलेन चमत्कृताः ।
प्रभावं मेनिरे दैवं संस्थितं भास्करादिषु ॥१२४॥
दिव्यं विलोक्य चाकाशं शुभ्रताराविचित्रितं ।
अदृष्टपारमब्धिञ्च तथाऽद्रीन् हिमशेखरान् ॥१२५॥
सर्वत्र देवता भिन्ना भिन्नस्वालयवासिनीः । [युग्मं॥
नाकीयाः पार्वतीश्चैव सामुद्रीश्चाप्यकल्पयन् ॥१२६॥
श्रौत्रा मन्त्रा यदा प्रत्ना व्यरच्यन्त तदेदृशीं ।
सूर्य्याद्याराधनां लोका भारतीयाः समाचरन् ॥१२७॥
प्रायो हि श्रौतमंत्रेषु वरुणेन्द्रादिदेवताः ।
नाकोदध्योकसः स्तोत्रैः प्रशस्यन्ते मुहुर्मुहुः ॥१२८॥
अनेनोक्तेन रूपेण सूर्यसोमादितेजसा ।
मर्त्याश्चमत्कृतास्तेषां कर्तुमारेभिरेऽर्चनां ॥१२९॥
यानि स्तोत्राणि चात्रत्यास्तेषां प्रारचयन् जनाः ।
तान्येव वैदिका मंत्राः प्रात्नना इति बुध्यतां ॥१३०॥

नासंस्तन्मन्त्रवक्तार ईश्वरेण प्रचोदिताः ।
भ्रान्तास्त्वसत्यदेवानां स्वयं तेऽकल्पयन् स्तवान्॥१३१॥
ये मौढ्यादीश्वरं प्रायस्त्यक्त्वाऽग्न्यादीनपूजयन् ।
स्वानिष्टदेवताः स्तोतुं तानीशश्चोदयेत् कथं ॥१३२॥

॥ शिष्य उवाच ॥

अग्नीन्द्रवरुणादीनां पूजोत्पेदे नृणां भ्रमात् ।
इत्यत्र भवतो वाक्यं यथार्थं स्वीकरोम्यहं ॥१३३॥
यत्त्वस्मिन्नाश्रितं देशे ब्रह्मविष्णुशिवार्चनं ।
त्वस्योत्पत्तिः कथं भूतेति भवान् व्याकरोतु मे ॥१३४॥

॥ गुरुरुवाच ॥

ईशस्य तत्वमज्ञात्वा सृष्टिस्थित्यादिकर्मणां ।
भिन्नानां हेतुभिन्नत्वं भ्रमेणाकल्पयन् बुधाः ॥१३५॥
यथा हि मेनिरे भिन्नान् देवान् द्युब्ध्यादिषु स्थितान् ।
तथोत्पत्त्यादिकार्य्याणां भिन्नांस्त्रीन् साधकानपि॥१३६॥
कर्त्तारं वेधसं देवं पातारं च तथा हरिं ।
संहर्त्तारं शिवं चेति चख्युर्भिन्नगुणात्मकान् ॥१३७॥
प्रवर्त्तयंति विद्वांसो यन्मतं धर्मनायकाः ।
जनाः प्रामाणिकं मत्वा सामान्या अनुयांति तत् ॥१३८॥
तस्माद् ब्रह्मादिदेवानां सम्मतानां क्रमात् क्रमात् ।
स्वाचार्य्यैश्चोदिता लोकाः कर्तुमारेभिरेऽर्चनं ॥१३९॥

तथा तेषां च देवानां महिम्नः कीर्त्तिरैधत ।
तद्देष्टृकल्पितैः स्तोत्रैः स्तुतानामुत्सवादिषु ॥१४०॥
पुंरूपिकाश्च सम्मत्य स्त्रीरूपाश्चापि देवताः ।
अत्रत्याः शास्त्रिणो देवान् शक्तियुक्तानवर्णयन् ॥१४१॥
तथाच शास्त्रिभिर्मत्वा मर्त्यौपम्यं दिवौकसां ।
दुर्गालक्ष्म्यादिदेवीनां स्थापिता भारते ऽर्चना ॥१४२॥
चिरत्ना यवनास्तद्वद् देवीदेवगणं पुरा ।
स्वबुद्धिकल्पितं मूढा आर्चन्नीशार्चनत्यजः ॥१४३॥

॥ शिष्य उवाच ॥

शास्त्रोक्तान्यवताराणि भवता कृत्रिमानि यत् ।
मतानि तत्र को हेतुरिति मां वक्तुमर्हसि ॥१४४॥

॥ गुरूवाच ॥

अनिश्चिता यथा प्रायः पुराणस्थाः कथाः समाः ।
तथा विष्णववताराणामपि वार्त्ता न निश्चिता ॥१४५॥
कस्मिन् काले ऽवताराणां प्रादुर्भावो ऽभवत् क्षितौ ।
कस्मिन् काले च तद्वार्त्ता पुस्तकेषु समार्प्यत ॥१४६॥
कस्मिन् काले च लोकास्तत्कथां मन्तुं प्रचक्रिरे ।
इत्यत्र विषये तत्वं विनिर्णेतुं न शक्नुमः ॥१४७॥युग्मं॥
मयोक्तादीदृशाच्छिष्यावताराणामनिश्चयात् ।
नार्हामः प्रत्ययं कर्तुं तच्चरित्रेषु कर्हिचित् ॥१४८॥

॥ शिष्य उवाच ॥

यद् रामकृष्णयोर्भूतमवतारद्वयं गुरो ।
सुख्यातं किं न तत्रापि प्रत्ययः कर्तुमर्हति ॥१४९॥

॥ गुरूरुवाच ॥

अत्रत्यं यैः पुरावृत्तं बुधैः सुष्ठु विचारितं ।
विख्यातौ रामकृष्णौ तौ भूपौ शूरौ वदंति ते॥१५०॥
परन्तु सूरयः प्रत्ना वाल्मीक्याद्याः समागधाः ।
अत्युक्त्या तच्चरित्राणि देवानीव ह्यवर्णयन् ॥१५१॥
तयोस्तु तात्विकी वार्ता वीरयोरामकृष्णयोः ।
यथा प्रबंधतो भाति तथा वक्ष्ये समासतः ॥१५२॥
सूर्याभिख्यान्वये रामो जज्ञे दशरथात्मजः ।
गुणाढ्य इति तत्कीर्तेरनुमानं करोम्यहं ॥१५३॥
ततस्त्वां लंकाधिपः सीतां बलवान् रावणोऽहरत् ।
स्वपत्न्युद्धृतये चातो रामो हर्तारमन्वगात् ॥१५४॥
ततः सुग्रीवहनुमत्साहाय्येन जघान तं ।
लंकायां रावणं राज्यं तद्भ्रात्रे च ददौ ततः ॥१५५॥
काव्येन राक्षसाः प्रोक्ता दशमूर्द्धा च रावणः ।
सुग्रीवाद्याश्च वर्ण्यंते तद्वन् मर्कटरूपकाः ॥१५६॥
तेतु नैवंविधा आसन् नृमात्रास्तु न संशयः ।
वन्यत्वात् संज्ञया ख्याताः दाक्ष्याद् वा कपिरक्षसां॥१५७॥
अयोध्यां दक्षिणाद् रामः परावृत्तः शशास तां ।
अत्युक्त्या तस्य राज्यन्तु प्रशंसंति कवीश्वराः ॥१५८॥

दशवर्षसहस्राणि दशवर्षशतानि च ।
रामो राज्यमुपासित्वा ब्रह्मलोकं प्रयास्यति ॥

इत्थं रामायणे प्रोचे तद्यशःशंसकः कविः ।
आयुस्तु मानुषं तस्मान् न्यूनं ब्रूतः श्रुतिस्मृती ॥१५९॥

यथा मानवे शास्त्रे १ अध्याये ८३ श्लोकः

अरोगाः सर्वसिद्धार्थाश्चतुर्वर्षशतायुषः ।
कृते त्रेतादिषु ह्येषामायुर्ह्रसति पादशः ॥ ८३ ॥

॥ श्रुतौ च शतायुर्वै पुरुष इति ॥

तद्वच्च कीर्त्यते यस्मिन् अवतीर्णः स्वयं हरिः ।
स कृष्णो वस्तुतो जज्ञे देवकीवसुदेवजः ॥१६०॥
वसुदेवपितूराज्यं त्वपहृत्योग्रसेनकः ।
शशास देवकभ्राता पश्चात् कंसश्च तत्सुतः ॥१६१॥
तं कृष्णो यौवनावस्थां प्राप्य कंसं क्रुधाऽवधीत् ।
पैतृकं मथुराराज्यं पुनर्लेभे बलेन च ॥१६२॥
अचिरात्तु जरासन्ध आगतो मगधाधिपः ।
कंसस्य श्वशुरः कृष्णं वहिश्चक्रे पराजितं ॥१६३॥
कृष्णस्तु मथुरातोऽरेर्विक्रमेण वहिष्कृतः ।
निर्ममौ गुर्जरे देशेऽब्धितीरे द्वारकापुरीं ॥१६४॥
ततोऽथ गुर्जराद् देशात् परावृत्य सहायतां ।
पाण्डवानां प्रचक्रे स कुरुक्षेत्रे महायुधि ॥१६५॥
कृष्णं तु कानने व्याधः कश्चनाहन् भ्रमेण ह ।
समुद्रप्लावनान् नष्टा द्वारकेति प्रकीर्त्यते ॥१६६॥

इदानीं भारते कृष्णो भगवान् मन्यतेऽत्र सः ।
प्रशंसा तत्क्रियाणां च विचित्रार्था प्रगीयते ॥१६७॥
तथैवाराधनां तस्य भारतीयाः सरीतिकां ।
चेक्रीयन्ते तदासक्ता दृढभक्त्या परेशवत् ॥१६८॥
अत्युक्त्या तच्चरित्रं तु महाभारत उच्यते ।
काव्यीभूतं तु सम्यक् तत् पश्चाद् भागवतादिषु ॥१६९॥
स हि नो तत्त्वतो देव आसीन् मर्त्यस्तु केवलं ।
कीर्त्तेः शिखरमारूढः शौर्य्यदाक्ष्यादिभिर्गुणैः ॥१७०॥
चिरे तन्मृत्युतः पश्चाद् गते काले तु तद्यशः ।
ऐधत मूलवार्त्तायां विस्मृतायां शनैः शनैः ॥१७१॥
शेषे तु तच्चरित्रेऽर्थानद्भुतान् बुद्धिकल्पितान् ।
काव्येनामिश्रयन् भूरीन् पुरावृत्तविदो बुधाः ॥१७२॥

## ॥ शिष्य उवाच ॥

एतद्देशीयशास्त्रेषु स्थिता येऽद्भुतकर्मणां ।
वृत्तान्तास्तेषु विश्वासो नास्माभिः कर्त्तुमर्ह्यते ॥१७३॥
तस्माच्चाश्चर्य्यकर्मोत्थप्रमाणाभावतो मुनीन् ।
नुन्नानीशेन शास्त्रोक्त्यै विनिश्चेतुं न शक्नुमः ॥१७४॥
अतश्चात्रत्यशास्त्राणामैशोत्पत्तिर्न कर्हिचित् ।
मतंव्या मानुषोत्पत्तिस्त्विवस्ति तेऽस्त्यूहनं गुरो ॥१७५॥
अनेनोहेन मत्स्वान्ते संजातः संशयो दृढः ।
नैशान्यत्रत्यशास्त्राणि नरधीकल्पितानि तु ॥१७६॥

किंत्वीशप्रोक्तशास्त्राणां विवेकाय द्वितीयकं ।
यच्चिह्नं भवतोक्तं तद् वैप्रशास्त्रेषु नास्ति किं ॥१७७॥

॥ गुरूरुवाच ॥

चतुर्थे यन्मया ऽध्याये सत्यशास्त्रविशेषकं ।
द्वितीयं लक्षणं प्रोक्तं तत् पुनर्वच्मि सांप्रतं ॥१७८॥
सत्तेत्यैशस्य शास्त्रस्य चिह्नं ज्ञेयं द्वितीयकं ।
सत्ता न विद्यते यस्य नास्ति तच्छास्त्रमैश्वरं ॥१७९॥
स्वयं हि सत्तमः शास्त्रं दद्यात् सत्तममीश्वरः ।
इत्येषा मे ऽनुमा शिष्य सम्यङ् न्याय्या प्रतीतये ॥१८०॥
परन्तु यस्य शास्त्रस्य पठनादनुभूयते ।
मूढत्वं शास्त्रकाराणां किम्वा भ्रष्टस्वभावता ॥१८१॥
तच्छास्त्रमैश्वरं नास्ति स्वयं मर्त्यैस्तु कल्पितं ।
इत्येव मन्तुमर्हन्ति सर्वे ईश्वरपूजकाः ॥१८२॥युग्मं॥
यतः सन् निर्मलः सम्यक् सर्वज्ञश्चेश्वरो नृषु ।
कथं मलान्वितं शास्त्रं मोघं वापि समर्पयेत् ॥१८३॥
परंतु मानुषा मूढाः स्वीयाज्ञानानुरूपकं ।
कल्पयेयुरसच्छास्त्रमिति संभवति ध्रुवं ॥१८४॥
तस्माच्च येषु शस्यन्ते कुकर्माणि दिवौकसां ।
वर्ण्यंते येषु चानेकाः कामाग्न्युत्तेजिकाः कथाः ॥१८५॥
मलश्च मानुषो येषु समन्तान् न निरुध्यते ।  [युग्मं॥
शास्त्राणि तानि नैशानि नरकल्पनजानि तु ॥१८६॥

पुनर्यत्रेश्वरः शास्त्रे परमार्य्यो ऽपवाद्यते ।
तच्छास्त्रं भ्रामकं सम्यङ् निराकुर्वंतु साधवः ॥१८७॥
सर्वज्ञः सत्तमो ऽनन्तशक्तिकः परमेश्वरः ।
सुपुण्यश्चात्मरूपश्चेति मन्यन्ते तदर्च्चकाः ॥१८८॥
परन्तु तद्विरुद्धं चेत् तद्गुणानां निरूपणं ।
कस्मिन्नप्युच्यते शास्त्रे तर्ह्यसच्छास्त्रमेव तत् ॥१८९॥
तथाच यानि शास्त्राणि न भवन्त्यमलानि वै ।
तान्यैश्वराणि मा विद्धि मर्त्यमौढ्योद्भवानि तु ॥१९०॥
शास्त्रेषु भारतीयेषु सत्ता भाति नवेति ते ।
समासेनाधुना वच्मि सुविचार्य्य समन्ततः ॥१९१॥
अत्रापि शिष्य यद् ब्रूयामप्रियं वचनं क्वचित् ।
तन् मा विद्धीर्ष्यया प्रोक्तं सन्मार्गज्ञापनाय तु ॥१९२॥
मन्ये हि यद्यपि भ्रान्तान् ब्रह्मविष्णुशिवार्चकान् ।
तथापि मे प्रियाः संति ते समीहे च तच्छुभं ॥१९३॥
यद्यच्च शृणुयास्त्वं तन् मा ऽपूर्वत्वान् निराकुरु ।
परन्त्वपक्षपातेन सन्मार्गेच्छुर्विचारय ॥१९४॥
मन्तव्य एक एवेशः परमः सत्तमो ऽपि च ।
अनादिः शाश्वतो ऽनन्तो निर्विकार्य्यात्मरूपकः॥१९५॥
असीममहिमा पुण्यः सर्ववेत्ता दयामयः ।
रागद्वेषादिहीनश्च मर्त्यभावानिभस्तथा ॥१९६॥
अशेषविष्टपस्रष्टा स्थापकः शासिता ऽपि च ।
विविक्तः सर्ववस्तुभ्यो विश्वस्मिन् सर्वगो ऽपि सन्॥१९७॥

नरादिस्वान्तमर्मज्ञः पापाप्रीतिकरो दृढं ।
कुचिन्तातो ऽप्यसन्तुष्टो न्यायेनाघस्य दंडदः ॥१९८॥
एतादृग्गुणसम्पन्नो मन्तव्यः परमेश्वरः ।
परन्त्वन्नत्यशास्त्रेषु सो ऽन्यथा वर्ण्यते शृणु ॥१९९॥
कल्पादौ निर्गुणं ब्रह्म मायायुक्तमपि स्थितं ।
आसीदव्यव्याकृता माया लीनसर्वपदार्थिका ॥२००॥
बहु स्यामिति संकल्प्य ब्रह्मणा प्रेरिता ततः ।
सा माया व्यक्ततां प्राप परिणामं क्रमेण च ॥२०१॥
रजोगुणान्वितो ब्रह्मा लोककर्त्ताेद्भभौ ततः ।
तथा सत्वगुणो विष्णुः शिवश्चैव तमोगुणः ॥२०२॥
एके तान् चक्षते देवान् भिन्नान् सृष्ट्यादिसाधकान् ।
तांस्त्वन्ये त्रीणि रूपाणि चक्षते परमात्मनः ॥२०३॥
अत्र प्राङ् निर्गुणं ब्रह्माप्रवृत्तं सृष्टिकर्मणि ।
पश्चात्तु सगुणं भूत्वा विश्वसृष्टावचेष्टत ॥२०४॥
ईशस्य परिणामो यो ऽत्रोक्तो मे स न रोचते ।
ईश्वरे परिणामो हि कथं स्यादविकारिणि ॥२०५॥
मायायुक्तश्च संसारमसृजत् परमेश्वरः ।
इत्येतद्वक्तृभिस्तस्य महिमा न विचारितः ॥२०६॥
यतः स्वयम्भुवस्तस्य स्वःस्थस्यानादिकस्य च ।
किमासीत् सहकारिण्या मायया नु प्रयोजनं ॥२०७॥
ईशश्चाविष्कृतो यादृग् ब्रह्मविष्णुमहेश्वरैः ।
तं तादृग् गुणसंयुक्तं मंतुं नार्हन्ति साधवः ॥२०८॥

ईशे हि सत्तमे सम्यङ् मलहीने च सर्वशः ।
रजस्तमोगुणौ स्यातां मलरूपौ स्थितौ कथं ॥२०९॥
एतादृग्भिर्गुणैर्युक्तमीशं यो मन्यते जनः ।
यथार्थामर्च्चनां तस्य कुर्य्याद् भक्तियुतां कथं ॥२१०॥
ब्रह्मविष्णुमहादेवाचरितासु च कासुचित् ।
क्रियासु भ्रष्टता भाति स्वयं शिष्य विचारय ॥२११॥
स्थितानि यानि शास्त्रेषु चरित्राणि दिवौकसां ।
कामादिरागयुक्तत्वं तेषां तत्र प्रतीयते ॥२१२॥
हितायावातरत् कृष्णः सतां नाशाय दुष्कृतां ।
इत्युक्तं भगवद् गीताश्लोकयोर्वक्ष्यमाणयोः ॥२१३॥

तथाच चतुर्थाध्याये सप्तमाष्टमौ श्लोकौ

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहं ॥
परित्राणाय साधूनां विनाशाय च दुष्कृतां ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे इति ॥

सद्भिस्तु नानुकर्त्तव्याः कृष्णेनाचरिताः क्रियाः ।
इति स्वीकर्त्तुमर्हन्ति साधवः शास्त्रपारगाः ॥२१४॥
यतोऽतिकामुकः कृष्णो रेमे गोपीगणैः सह ।
तथा परस्त्रियं राधामहरद् व्यभिचारकृत् ॥२१५॥
एतादृक्कर्मणां ध्यानात् त्याज्यानां त्राणलिप्सुभिः ।
गच्छेयुः साधवः शिष्य परित्राणं कथं नराः ॥२१६॥
स्वयं चैवंविधः कृष्णो दुर्जनान् नाशयिष्यति ।
स्वीयानुकारिणोऽपीति न संभवति कर्हिचित् ॥२१७॥

तथैव मद्यपो ब्रह्मा स्वसुतारतिकामुकः ।
देवानामगमन् निन्दामिति शास्त्रेषु वर्ण्यते ॥२१८॥
शिवश्च कामुको मत्तो वेश्यागाम्युग्रभावकः ।
इत्येवेतस्ततः शिष्य पुराणेषु प्रगीयते ॥२१९॥
परन्तु विस्तरेणालं वृत्तान्तो हि दिवौकसां ।
अशेषो ज्ञायते सुष्ठु पंचलक्षणपारगैः ॥२२०॥
ईदृंशि निन्द्यकर्माणि त्वविङ्गितानि मयाऽधुना ।
नेशेन कर्हिचित् कर्त्तुं शक्यंते विमलात्मना ॥२२१॥
न भान्त्याविष्कृतास्तेषु चरित्रेष्वेश्वरक्रिया ।
नृणां तु कल्पिता बुद्ध्या नृरागप्रतिमूर्त्तयः ॥२२२॥
एतादृग्देवतापूजा येषु शास्त्रेषु दिश्यते ।
कथं तदीश्वरोक्तत्वं मतमीश्वरपूजकैः ॥२२३॥
अत्यन्तनिर्मलात्मा हि मन्तव्यः परमेश्वरः ।
कामादिभ्रष्टरागाणां सर्वथैव निषेधकः ॥२२४॥

॥ शिष्य ऊवाच ॥

देवानां याः क्रियाः सर्वा भवता निन्दिता गुरो ।
बुधैस्तद्दोषवत्त्वस्य परिहारः कृतो न किं ॥२२५॥

॥ गुरूरुवाच ॥

कृष्णीयकर्मनिन्द्यत्वं परिहर्त्तुं चिचेष्टिरे ।
कथं बुधाः शृणु त्वं तत् प्रोक्तं भागवते यथा ॥२२६॥

तथाच भागवत दशमस्कंधे त्रयस्त्रिंशाध्याये

। राजोवाच ।

संस्थापनाय धर्मस्य प्रशमायेतरस्य च ।
अवतीर्णो हि भगवानंशेन जगदीश्वरः ॥
स कथं धर्मसेतूनां वक्ता कर्त्ताभिरक्षिता ।
प्रतीपमाचरद् ब्रह्मन् परदाराभिमर्शनं ॥
आप्तकामो यदुपतिः कृतवान् वै जुगुप्सितं ।
किमभिप्राय एतन्नः संशयं छिन्धि सुव्रत ॥

॥ शुक उवाच ॥

धर्मव्यतिक्रमो दृष्ट ईश्वराणां च साहसं ।
तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा ॥
नैतत् समाचरेज्जातु मनसापि ह्यनीश्वरः ।
विनश्यत्याचरन् मौढ्याद् यथा ऽरुद्रो ऽब्धिजं विषं ॥
ईश्वराणां वचः सत्यं तथैवाचरितं क्वचित् ।
तेषां यत् स्ववचो युक्तं बुद्धिमांस्तत् समाचरेत् ॥
कुशलाचरितेनैषामिह स्वार्थो न विद्यते ।
विपर्य्ययेण वानर्थो निरहंकारिणां प्रभो ॥
किमुताखिलसत्वानां तिर्यङ्मर्त्यदिवौकसां ।
ईशितुश्चेशितव्यानां कुशलाकुशलान्वय इति ॥

अस्माच्छुकोत्तराच्छिष्य न रुचिर्जायते मम ।
नृरूपं हीश्वरो धृत्वा कुक्रियाः कथमाचरेत् ॥२२७॥
अन्यच्च भगवद्गीतास्थले वाक्ये यदुक्तवान् ।
कृष्णोऽपि वचनं तस्य विपरीतं शुकोत्तरं ॥२२८॥

॥ तथाच गीतायां तृतीयाध्याये विंशतितमाद्यः श्लोकाः ॥

कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।
लोकसंग्रहमेवापि संपश्यन् कर्त्तुमर्हसि ॥
यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत् प्रमाणं कुरुते लोकस्तदनुवर्त्तते ॥
न मे पार्थास्ति कर्त्तव्यं त्रिषु लोकेषु किंचन ।
नानवाप्तमवाप्तव्यं वर्त्त एव च कर्मणि ॥
यद्यहं हि न वर्त्तेयं जातु कर्मण्यतंद्रितः ।
मम वर्त्मानुवर्त्तंते मनुष्याः पार्थ सर्वशः ॥
उत्सीदेयुरिमे लोका न कुर्य्यां कर्म चेदहं ।
संकरस्य च कर्त्ता स्यामुपहन्यामिमाः प्रजाः ॥
सक्ताः कर्मण्यविद्वांसो यथा कुर्वंति भारत ।
कुर्य्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहमिति ॥

यथोक्तमत्र गीतायां तथास्माभिः प्रतीक्ष्यते ।
देहं धृत्वेश्वरो धर्म्मं प्रमाणायाचरेदिति ॥२२९॥
यतः प्रजाः क्रिया राज्ञां देवानां च तदर्चकाः ।
विज्ञाय प्रायशः कुर्वंत्यनुरूपाः क्रियां स्वयं ॥२३०॥
तस्माच्च यत्प्रमाणेन भ्रामित्ता उत्पथं नराः ।
नीयेरंस्तत्क्रियामीशो न कुर्य्यादित्यमूह्यते ॥२३१॥

॥ शिष्य उवाच ॥

मनुष्याः कथमीशस्यानुकर्त्तुं शक्नुयुः क्रियाः ।
क्व सर्वशक्तिमानीशः क्व मर्त्त्याश्चाल्पशक्तिकाः ॥२३२॥
इत्यादिना विचारेण लीलां भगवतो नराः ।
अनुकर्त्तुं न चेष्टेरन्निति कुर्वे ऽनुमां गुरो ॥२३३॥

॥ गुरूरुवाच ॥

शरीरमीश्वरो धृत्वा याः करोत्यतिमानुषीः ।
क्रियास्ता अनुकर्त्तुं कः मानुषः शक्यति स्वयं ॥ २३४॥
नृशक्तिसाध्यकर्म्माणि यानि त्वीशो नृदेहभाक् ।
समाचरेत् कथं तानि नानुकुर्य्युर्नरा अपि ॥२३५॥
तस्मात् कृष्णादिदेवानां व्यभिचारादिकाः क्रियाः ।
ज्ञात्वा तदनुगा मन्ये नीयेरन्नुत्पथं ततः ॥२३६॥
अन्यच्चेदृक्चरित्राणां पठनाच्छ्रवणादपि ।
श्रोतृणां पाठकानां च मलिनीक्रियते मनः ॥२३७॥
तथा नीत्युपदेशा ये स्थिताः शास्त्रेष्वितस्ततः ।
प्रायो देवप्रमाणैस्ते पुराणस्थैर्निराकृताः ॥२३८॥
देवान् हि मानवा बुद्ध्वा कामक्रोधवशीकृतान् ।
रागार्त्ताः कुक्रियाः कुर्य्युर्व्याजेनामरकर्म्मणां ॥२३९॥
अतः कृष्णादिदेवानां याः पुराणोदिताः क्रियाः ।
ता मा त्वमैश्वरीर्विद्धि कविशक्त्या तु कल्पिताः॥२४०॥
तथाचात्रत्यशास्त्रेषु न्याय्यमीश्वरवर्णनं ।
न वर्त्तते न तस्यार्च्चा यथार्था दिश्यते ऽमला ॥२४१॥

॥ शिष्य उवाच ॥

एतद्देशीय शास्त्राणां मानुषोत्पत्तिसूचकं ।
किमन्यल्लक्षणं किंचिद् भवतो भाति हे गुरो ॥२४२॥

॥ गुरूरुवाच ॥

पुराणाद्येषु शास्त्रेषु भूयो ऽन्योन्यविपर्ययः ।
देवानामुद्भवाद्येषु विषयेषु प्रतीयते ॥२४३॥
यथा भागवते वेधा विष्णुनाभ्युत्थपद्मजः ॥
लिंगाभिख्ये पुराणे तु शिवपार्श्वज उच्यते ॥२४४॥
पुनर्मात्स्ये पुराणे तु वेधा एवासृजच्छिवं ।
इत्युक्तमन्यथा चान्यपुराणेषु क्रमः स्मृतः ॥२४५॥

यथा मत्स्यपुराणे

ततो ऽसृजद्वामदेवं त्रिशूलवरधारिणमिति

तद्वत्कृष्णावतारस्य विषये सम्मतिर्नहि ।
सर्वेषां भाति शास्त्राणां विरोधस्तु परस्परः ॥२४६॥
यतः क्षुद्रांशमात्रेण कृष्णो विष्णुरवातरत् ।
इत्थं विष्णुपुराणस्य पञ्चमें ऽशे कथोच्यते ॥२४७॥
तथा भागवतीये ऽपि श्लोके पूर्वं मयदृते ।
अंशेनावातरत् क्षौण्यां भगवानिति कथ्यते ॥२४८॥

यथा राजोवाच

संस्थापनाय धर्मस्य प्रशमायेतरस्य च ।
अवतीर्णो हि भगवानंशेन जगदीश्वर इति ॥

परन्त्वन्येषु शास्त्रेषु परमात्मा स्वयं हरिः ।
कार्त्स्न्येनावातरत्कृष्णे इतिप्रोक्तमनेकशः ॥२४९॥

यथा भगवद्गीतायां १० अध्यायस्य १२ १३ श्लोकयोरुक्तं

अर्जुन उवाच

परं ब्रह्म परं धाम पवित्रं परमं भवान् ।
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुं ॥१२॥
आहुस्त्वा मृषयः सर्वे देवर्षिर्नारदस्तथा ।
असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे इति ॥१३॥

तथा ब्रह्मादिदेवानां को मन्तव्यो महत्तमः ।
इत्यत्र वर्त्तते वादस्तत्तद्देवानुयायिनां ॥२५०॥
इदानीं भारते प्रायो निवृत्ता वेधसोऽर्चना ।
विप्राश्चाधुनिकास्तस्य पक्षपातं न कुर्वते ॥२५१॥
परन्तु स्वस्वदेवस्य महिम्नो विषये मिथः ।
शैवानां वैष्णवानां च विवादो वर्त्तते दृढः ॥२५२॥

तथाच भागवते

भवव्रतधरा ये च ये च तान् समनुव्रताः ।
पाषंडिनस्ते भवन्तु सच्छास्त्रपरिपंथिनः ॥
मुमुक्षवो घोररूपान् हित्वा भूतपतीनथ ।
नारायणकलाः शान्ता भजंति ह्यनसूयकाः ॥

तथाच पद्मपुराणे ॥

यस्तु नारायणं देवं ब्रह्मरुद्रादिदैवतैः ।
सममन्यैर्निरीक्षेत स पाषंडी भवेत् सदा ॥
किमत्र बहुनोक्तेन ब्राह्मणा येऽप्यवैष्णवाः ।
न स्पृष्टव्या न वक्तव्या न द्रष्टव्याः कदाचन ॥
ये ऽन्यदेवं परत्वेन वदन्त्यज्ञानमोहिताः ।
नारायणाज्जगन्नाथात् ते वै पाषंडिनः स्मृताः ॥

वासुदेवं परित्यज्य यो ऽन्यदेवमुपासते ।
तृषितो जाह्नवीतीरे कूपं खनति दुर्मतिः ॥

---

विष्णुदर्शनमात्रेण शिवद्रोहः प्रजायते।
शिवद्रोहान्न संदेहो नरकं यान्ति दारुणं ॥
तस्मान्न विष्णुनामापि न वक्तव्यं कदाचन ।
एष देवो महादेवो विज्ञेयस्तु महेश्वरः ॥
न तस्मात् परमं किंचित् पदं समधिगम्यते ।

मूर्त्यर्चाविषये चैव ज्ञेयः शास्त्रविपर्ययः ।
शास्त्रेषु केषुचिद् दिष्टा सा निषिद्धा तु केषुचित्॥२५३॥

तथाचोक्तं ॥

यो मां सर्वेषु भूतेषु सन्तमात्मानमीश्वरं ।
हित्वार्चां भजते मौढ्याद् भस्मन्येव जुहोति सः ॥
काष्ठलोष्ट्रेषु मूर्खानां युक्तस्यात्मनि देवता । ।
मृच्छिलाधातुदार्वादिमूर्त्तावीश्वरबुद्धयः ॥
क्लिश्यंति तपसा मूढाः परां शान्तिं न यान्ति ते ।
कांचनीं प्रतिमां कृत्वा नानारत्नमयीं शुभां ॥
पूजयेद् यस्तु विधिना स याति परमं पदं ।
प्रतिमायां शिलाबुद्धिं कुर्वाणो नरकं व्रजेदित्यादि च ॥

प्रामाण्यं चाधिकं कस्य शास्त्रस्यात्रापि सम्मतिः ।
सर्वेषां नास्ति शास्त्राणां किन्त्वन्योन्यविपर्य्ययः॥२५४॥
प्रायो हि सर्वशास्त्रेषु श्रुतेः प्रामाण्यमुच्यते ।
परन्तु ब्रह्मवैवर्त्तपुराणे मतमन्यथा ॥२५५॥

तच्चान्येषां पुराणानां भ्रमच्छेतृश्रुतेस्तथा ।
इत्येषा तत्पुराणादौ तत्प्रशंसा कृतर्षिभिः ॥२५६॥
शास्त्रोक्तानां विपर्य्याये मतानामीदृशे स्थिते ।
सर्वेषामेव याथार्थ्यं न संभवति कर्हिचित् ॥२५७॥
नानाविधैः प्रमाणैस्तु संक्षेपेण मयोदितैः ।
सर्वेषां मानुषोत्पन्निस्तच्छास्त्राणां प्रतीयते ॥२५८॥
अन्यच्च शिष्य सिद्धान्तविपरीतानसंगतान् ।
वृत्तान्तांस्त्वं पुराणेषु बहुलान् विद्धि संस्थितान् ॥२५९॥
ख्यातो हि भास्कराचार्यः स्वसिद्धान्तशिरोमणौ ।
भूमीमाकाशशून्यस्थां गोलाकारां च भाषते ॥२६०॥

तथाच ।

भूमेः पिण्डः शशाङ्कज्ञकविरविकुजेज्यार्किनक्षत्रकक्षा
वृत्तैर्वृत्तो वृतः सन् मृदनिलसलिलव्योमतेजोमयोऽयं ॥
नान्याधारः स्वशक्त्यैव वियति नियतं तिष्ठतीत्यादिना ।

अपिच ।

मूर्त्तो धर्त्ता चेद्धरित्र्यास्तदन्यस्तस्याप्यन्योऽस्यैवमत्रानवस्था ।
अन्त्ये कल्प्या चेत् स्वशक्तिः किमाद्ये किन्नो भूमिरित्यादिना ॥

सिद्धान्तविपरीतेषु पुराणेषु तु भूरियं ।
पद्माकारा क्वचित् प्रोक्ता कूर्मपृष्ठोपरिस्थिता ॥२६१॥
सिद्धान्तविद्यया चान्यपुराणेषु वसुंधरा ।
एकस्मिन् लम्बिता मूर्ध्नि शेषनागस्य कल्प्यते ॥२६२॥

तारामहार्कचंद्रादिविषयांश्चापरांस्तथा ।
पुराणप्रोक्तवृत्तान्तानयथार्थान् विदुर्बुधाः ॥२६३॥
पुराणेषूदिताः सप्त घृतक्षीरादिसागराः ।
गतैः सर्वाब्धिभागेषु नाविकैः क्वापि नेक्षिताः ॥२६४॥
नेशेन कर्हिचित् कर्तुं भ्रमलेशोऽपि शक्यते ।
अत ईदृग्भ्रमो यस्मिन् शास्त्रं तद् भात्यनैश्वरं ॥२६५॥
तस्मादत्रत्यशास्त्राणि तत्रानेकभ्रमस्थितेः ।
न ज्ञेयानीश्वरोक्तानि नरमात्रोत्थितानि तु ॥२६६॥

॥ शिष्य उवाच ॥

एतद्देशीयशास्त्राणां नृमात्रोत्थत्वसूचकं ।
प्रमाणमपरं किं त्वं वक्तुं शक्नोषि मे गुरो ॥२६७॥

॥ गुरुरुवाच ॥

चतुर्धा जातिभेदो यो मतः शास्त्रे स शिष्य मे ।
नेशेन विहितो भाति नृभिस्तु स्थापितः स्वयं ॥२६८॥
विप्रा ब्रह्माननोद्भूताः क्षत्रिया बाहुजास्तथा ।
वैश्याश्चैवोरुजाः शूद्राश्चाङ्घ्रिजाता इतीर्य्यते ॥२६९॥
अत्यन्तश्लाघया शास्त्रे प्रशस्यन्ते द्विजातयः ।
धर्मस्य मूर्त्तयः प्रोक्ताः सर्वभूतेश्वरास्तथा ॥२७०॥
भूदेवाः प्रभवः श्रेष्ठा भूस्थसर्वधनार्हकाः ।
गोप्तारो धर्मकोषस्येत्यादिभिर्नुतिभिः स्तुताः ॥२७१॥
तथा प्रत्येकवर्णस्य भिन्नो भिन्नः स्वभावजः ।
तत्तद्वर्णैरनुष्ठेयो धर्म्मः शास्त्रे निरूप्यते ॥२७२॥

स्वाभाविको विशेषस्तु नराणां नास्ति जातिजः ।
वंशान् नृजातिरेकैव चैकस्मादुदपद्यत ॥२७३॥
विप्राणामन्यवर्णयानां जनानां च गुणागुणान् ।
प्रत्यक्षान् सुविचारेण सम्यग् यश्चिन्तयेद् बुधः ॥२७४॥
स विप्रान् क्षत्रियान् वैश्यान् शूद्रान् संकरजांस्तथा ।
समस्वभावसंपन्नान् सुतरां शिष्य निर्णयेत् ॥२७५॥युग्मं॥
रागद्वेषादिसंयुक्ताः प्रलीयन्ते ऽपरे यथा ।
जनाः शूद्रादिजातीयास्तथैव ब्राह्मणा अपि ॥२७६॥
न रूपेणेन्द्रियैर्बुद्ध्या न प्रकारान्तरेण वा ।
उत्कर्षो भाति विप्राणां विशेषो वा स्वभावजः ॥२७७॥
सर्वशास्त्रार्थविज्ञौ हि गूढविद्याविचारणे ।
शूद्राणां ब्राह्मणानां च समाना बुद्धिसूक्ष्मता ॥२७८॥
ईशस्याराधना चैव ब्राह्मणैः साध्यते यथा ।
तथैव साध्यते सम्यक् शूद्राद्यैर्भक्तिमानसैः ॥२७९॥
अन्यच्च जातिभेदस्यावास्तवत्वप्रकाशकं ।
प्रमाणं ते परं शिष्य कथयामि निशामय ॥२८०॥
समाना रीतयो येषां मनुष्याणां भवन्ति वै ।
समानोत्पत्तयस्ते स्युरिति न्यायेन तर्क्यते ॥२८१॥
आचेरुर्ब्राह्मणाः प्रत्ना वेदादिष्टं मखक्रमं ।
होमादिसंप्रदायश्च भारते ऽद्यावधि स्थितः ॥२८२॥
तथैव प्राक्तने काले नानादेशान्तरेष्वपि ।
मेषादिपशुयागानां संप्रदायः स्थितो ऽभवत् ॥२८३॥

विशेषतस्तु यः शास्त्रे मौस्ये यज्ञविधिक्रमः ।
आदिष्टस्तं जना यत्नादनुतस्थुर्यहूदिनः ॥२८४॥
तथाच समरूपेण क्रतुरीतिं समाचरन् ।
अत्रत्या ब्राह्मणा मर्त्याश्चापि देशान्तरोद्भवाः ॥२८५॥
समानसंप्रदायत्वाद् भवेदप्येकवंशता ।
विप्राणामन्यदेशीयनराणाञ्चानुमाम्यहं ॥२८६॥
विप्रा जना विदशीयाश्चैकवंश्या भवंति चेत् ।
तदा ऽत्रत्येषु मर्त्येषु जातिभेदो भवेत् कथं ॥२८७॥
इत्यादेस्तर्कतः शिष्य मतो भारतनीवृति ।
विप्रादिर्वर्णभेदो यः स निराक्रियतां बुधैः ॥२८८॥
अन्याय्यं त्वीदृशं येषु मतं शास्त्रेषु विद्यते ।
ऐशानि न प्रतीयन्ते तानि मर्त्यैः कृतानि तु ॥२८९॥

॥ शिष्य उवाच ॥

विप्रादिर्वर्णभेदः स विद्यते चेदवास्तवः ।
तदा तं प्राक्तना मर्त्या मन्तुमारेभिरे कथं ॥२९०॥

॥ गुरुरुवाच ॥

पुरावृत्तप्रबंधानां विश्वास्यानामभावतः ।
न शक्यो जातिभेदस्य सम्यग् व्याकर्तुमुद्भवः ॥२९१॥
परन्तु प्राक्तना मर्त्याः प्रायशो बालिशाः स्थिताः ।
इत्थं पूर्वेतिहासानां विचारेण प्रतीयते ॥२९२॥

यथा च बालका यद्यच्छ्कुर्वंति प्रतियन्ति तत् ।
पूर्वे मतानि भेजुस्ते ऽसम्भवानि जनास्तथा ॥२९३॥
कदाचिज्जिष्णुवर्गस्य विदेशीयस्य धीमतः ।
अत्रागमेन वर्णानां भेदारम्भो ऽभवत् पुरा ॥२९४॥
नरोषितावनिर्यापि जलप्लावनतः परे ।
ज्ञातव्यः प्रथमं नृणां भारते ऽत्र समागमः ॥२९५॥
तत्कालादद्यपर्यन्तं वर्षाः पंचसहस्रकाः ।
नातीताः किंचिदूनं तु बुधैरित्थं विनिश्चितं ॥२९६॥
ये मर्त्या वर्वरा आदावूषुर्भारतनीवृति ।
देशे ऽत्राद्यापि तच्छेषाः परितःस्थवनाश्रिताः ॥२९७॥
वेदानुयायिनः पश्चात् समागत्य मरुद्दिशः ।
नरानाद्यान् वशीचक्रुस्तद्देशे चावसंस्ततः ॥२९८॥
श्यामादिवर्णभिन्नत्वं कदाचिच्चाभवत् तदा ।
प्रत्नेष्वत्रत्यमर्त्येषु तदाक्रान्तृजनेषु च ॥२९९॥
लोका हि भिन्नदेशोया एकवंशोद्भवा अपि ।
श्यामश्वेतादिवर्णाद्यैर्विशेषैः संति संयुताः ॥३००॥
दृष्ट्वा विशेषमन्योन्यं वर्णभाषादिकेषु च ।
कदाचिज्ज जातिभेदस्य ततस्ते चक्रिरे ऽनुमां ॥३०१॥
क्रमेण तादृशा शिष्य प्रकारेणापरेण वा ।
देशे ऽस्मिन् जातिभेदस्याभवन् मन्ये समुद्भवः ॥३०२॥
यथा तु संप्रदायानां मतानां चापि पक्वता ।
न सद्यो जायते लोके शनकैस्तु प्रसर्पति ॥३०३॥

तथैव जातिभेदस्य संप्रदायोऽपि भारते ।
न सद्यः पकृतां प्राप शनैस्त्विथं प्रतीयते ॥३०४ युग्मं॥
कथं तु जातयो भिन्नाः पदं स्वं स्वमवाप्नुवन् ।
यथाधियाऽवगच्छामि तथा ते व्याकरोमि तत् ॥३०५॥
ये लोका ज्ञानसम्पन्ना नानाशास्त्रविदोऽपि च ।
तदुत्कर्षं जना अज्ञाः सम्मन्यन्ते स्वभावतः ॥३०६॥
अतो हेतोस्तथा नानाप्रकारोपायवेत्तितः ।
अज्ञानात् चतुराः प्राय आनयन्ति निजं वशं ॥३०७॥
यस्माच्चादृष्टदेवादिभयं प्रायो नृषु स्थितं ।
तस्मात् मुख्यं पदं प्रापुर्याजका देवसेवकाः ॥३०८॥
प्रजायाश्च यदन्यस्या योद्धारो बलवत्तराः ।
द्वितीयं क्षत्रियास्तस्माज् जिष्णवो लेभिरे पदं ॥३०९॥

॥ शिष्य उवाच ॥

श्यामादिवर्णभिन्नत्वाद् भाषाभिन्नत्वतोऽपिच ।
किं भिन्नदेशिनां नृणां जातिभेदो न तर्क्यते ॥३१०॥

॥ गुरुरुवाच ॥

एकैव शिष्य भाषासीत् समस्तानां नृणां पुरा ।
इत्थं मोस्युक्तशास्त्रेभ्यः प्राचीनेभ्यः प्रतीयते ॥३११॥
भाषाभेदस्त्वभूत् पश्चात् मनुष्याश्च ततः परं ।
देशान्तरेष्वनेकेषु व्यस्तीर्य्यंत पृथक् पृथक् ॥३१२॥
ततश्च भिन्नदेशीयग्रीष्मशीतादिभेदतः ।
श्यामादिवर्णभिन्नत्वं भिन्नदेशीयजेष्वभूत् ॥३१३॥

तथाच कालगौरादिवर्णभिन्नत्वतो नृणां ।
कदाचिन्न जातिभिन्नत्वमनुमातुं न शक्यते ॥३१४॥

॥ शिष्य उवाच ॥

चतुर्धा जातिभिन्नत्वोद्भवस्य याकृतिं स्फुटां ।
किं काम्यपरां वक्तुं भवान् शक्नोति मे गुरो ॥३१५॥

॥ गुरुरुवाच ॥

नृणां भिन्नपदत्वेन प्रवृत्त्या च स्वकर्मसु ।
सर्वेषां जायते सौख्यं साहाय्यं च परस्परं ॥३१६॥
प्रवृत्ताः कर्मसु स्वेषु केवलेषु निरन्तरं ।
प्रयान्ति मानवा दाक्ष्यमभ्यासार्जितकौशलाः ॥३१७॥
कार्य्येषु यस्तु भिन्नेषु विविधेषु प्रवर्त्तते ।
सो ऽनेककर्मकर्त्तृत्वात् कस्मिन्नपि न सिध्यति ॥३१८॥
तथा च कर्षकः शिल्पिकर्म कुर्वन् न सिध्यति ।
न वा कृषिक्रियां शिल्पी न वा तक्षा चिकित्सनं॥३१९॥
कदाचित् प्राग् विचार्य्येदं राजनीतिविदो नृपाः ।
प्रजा नियोजयामासुर्भिन्नेषु स्वस्वकर्मसु ॥३२०॥
यथा च कर्मसु स्वेषु तास्तिष्ठेयुर्निरन्तरं ।
तथा दृढैरबध्नंस्ताः शृङ्खलैर्जातिरूपकैः ॥३२१॥

॥ शिष्य उवाच ॥

स्वीकृत्य:कर्मभेदोत्थं फलसंघं कथं भवान् ।
निन्दया जातिभेदं तं वक्ति बंधनरूपकं ॥३२२॥

॥ गुरुरुवाच ॥

नैसर्गिकी पितुर्बुद्धिर्ये चाभ्यासार्जिता गुणाः ।
स्वभावात् तत्सुतस्तेषामधिकारी न जायते ॥३२३॥
तथैव यत्पिता मन्दः क्षुद्रकर्म्मा च विद्यते ।
कदाचित् स सुतो दक्षः स्याद् विद्याप्तिक्षमोऽपि च॥३२४॥
जायन्ते प्रभुधीमंतो जनाः सर्वासु जातिषु ।
जिज्ञासुबुद्धिसम्पन्ना विद्याभ्यासक्षमास्तथा ॥३२५॥
स्वानिष्टं पैतृकं कर्म त्यक्तुं ते चेन् नशक्नुयुः ।
स्वजातिनियमैर्बद्धास्तर्हि नश्यंति तद्गुणाः ॥३२६॥
ये जातिबन्धनाबद्धाः स्वतंत्राश्च भवंति ते ।
स्वस्वगुणानुकूलासु प्रवर्त्तंते हि वृत्तिषु ॥३२७॥
अतोऽपि जातिबद्धेऽस्मिन् देशे सर्वत्र दृश्यते ।
शक्तिर्नारस्वभावस्य जातिशृङ्खलभेदिका ॥३२८॥
विप्रा हिं शास्त्रतः सर्वे शास्त्राध्ययनधर्मकाः ।
वृत्तीस्तु परिचर्य्याद्या आश्रयंति सुभूरयः ॥३२९॥
दासत्वं चेति शूद्राणां धर्मः शास्त्रानुसारतः ।
शूद्रास्तु मगधे प्रापूराजत्वपदवीमपि ॥३३०॥
आदौ निरूपितं शास्त्रे यथा वर्णचतुष्टयं ।
तथा तन्नो चिरं तस्थौ सद्यः प्राप तु संकरं ॥३३१॥
इदानीं केवला विप्रा असंकीर्णा अवस्थिताः।
तदन्येषां तु वर्णानां बहुधा संकरोऽभवत् ॥३३२॥

नृस्वभावविरुद्धो यो नियमो नरकल्पितः ।
स ग्लानिमचिराद् गच्छेच्छास्तृभिः स्थापितोऽपि सन् ३३३

॥ शिष्य उवाच ॥

किं गुरो नीवृति क्वापि कस्मिंश्चिद् भारतादृते ।
स नृणां जातिभेदस्य संप्रदायो मतोऽभवत् ॥३३४॥

॥ गुरुरुवाच ॥

नैतस्मिन् केवलं देशे जातिभेदस्य संस्थितिः ।
पुरा तत्संप्रदायस्तु पारसीके तथास्थितः ॥३३५॥
एवं मिश्राख्यदेशे च साप्तवर्ण्यसमन्विते ।
यथाऽत्र ब्राह्मणा मुख्यास्तथा तत्रापि शास्त्रिणः ॥३३६॥
निवृत्तो जातिभेदस्तु तस्मिन्नीवृद्द्वयेऽधुना ।
तन्मते प्राक्तने लुप्ते स्थापिते च ततो नवे ॥३३७॥
सौगताश्चात्र देशेऽपि पुरा बहुनुगैर्युताः ।
जातिभेदं निराकुर्वन् वेदस्य परिपंथिनः ॥३३८॥
इदानीं भारताल्लुप्ता अपि ते सौगताः समे ।
पुराऽस्मिन् न्यवसन् देशेऽनेके तदनुयायिनः ॥३३९॥
सुख्यातोऽमरसिंहश्च योऽमराभिधकोषकृत् ।
सोऽप्यासीत् सौगतो भूपास्तथानेके सपंडिताः ॥३४०॥
प्रमाणैरीदृशैः शिष्य जातिभेदो निरस्यते ।
दिष्टश्च यत्र शास्त्रे स ईशं शास्त्रं न भाति तत् ॥३४१॥

॥ शिष्य उवाच ॥

शास्त्राणां भारतीयानां मानुषोत्पत्तिसिद्धये ।
अनेकानि ... न त्वया प्रोक्तानि हे गुरो ॥३४२॥
मलान्वितास्तु या वार्त्ता अन्याय्यानि मतानि च ।
यान्युद्धृतानि शास्त्रेभ्यो भवता खण्डितानि च ॥३४३॥
न तानि मुख्यशास्त्रेषु वेदषड्दर्शनादिषु ।
वर्त्तंते ज्ञानकोषेषु पुराणेषु तु प्रायशः ॥३४४॥ युग्मं॥
पौराणिकीः कथाः सर्वा मन्यन्ते पंडिता अपि ।
तथापि भवतो वादात् त्याज्यास्ताःस्वीकरोम्यहं॥३४५॥
तंत्राणि चात्यपूतानि दृढलज्जाकराणि च ।
हेयानि साधुभिः सर्वैर्मन्ये प्रीतिकरः स्वयं ॥३४६॥
परन्तु वेदवेदाङ्गस्मृतिषड्दर्शनस्थितं ।
मतं विपश्चितः सर्वे आद्रियंते विशेषतः ॥३४७॥
सामान्यपुरुषाज्ञातदर्शनस्थमतान्यतः ।
श्रेयांसि किं न विद्यन्ते विदुषां मुक्तिदानि च ॥३४८॥

॥ गुरुरुवाच ॥

आचारान् भारतीया याननुतिष्ठंति साम्प्रतं ।
न वेदार्थानुकूलास्ते बहुधा विकृतिस्त्वभूत् ॥६४९॥
न वेदोक्तार्चनां कोऽपि सम्यगाचरति द्विजः ।
प्रायश्च नावगच्छन्ति तन्मतानि बुधा अपि ॥३५०॥
यथोक्तं प्राङ् मया शिष्य तथा धर्ममतादिषु ।
विकारं क्रमशः प्राप्तान् विद्धि भारतवासिनः ॥३५१॥

तस्माच्चाधुनिका विप्राः पुराणोक्तमतानुगाः ।
वेदत्यजः प्रतीयन्ते न तु वेदानुयायिनः ॥३५२॥
धर्मस्याधुनिकस्यातः खण्डनं यच्चिकीर्षति
किं खण्डनेन वेदानामस्ति तस्य प्रयोजनं ॥३५३॥
सिद्धे पौराणिकानां हि मतानां खण्डने स्फुटे ।
धर्मस्याधुनिकस्यापि खण्डनं सिध्यति ह्यलं ॥३५४॥
यथा तु शिष्य वेदानां तत्त्वं शक्नोषि वेदितुं ।
तथा तद्विषये वार्त्ता वक्ष्यमाणां निशामय ॥३५५॥
चमत्कारक्रियाशक्तेः संस्थितिर्वेदवक्तृषु ।
न मंतव्येति ते स्यादावध्यायस्य मयोदितं ॥३५६॥
तस्माच्चाश्चर्य्यकर्मोत्थप्रमाणाभावतः श्रुतेः ।
न बोध्यमीश्वरोक्तत्वमिति प्रागनुमा कृता ॥३५७॥
वेदोक्तदेवतार्च्चाया विषये च मया पुरा ।
कृता या व्याकृतिस्तां त्वं पुनः शिष्य निशामय ॥३५८॥
प्राक् काले ईश्वरस्यार्चा यथार्था प्राचलद् भुवि ।
तत्काले हीश्वरो मर्त्यान् स्वस्य पूजामुपादिशत् ॥३५९॥
पश्चात् तु मानुषा मौढ्याद् विकार्य्येश्वरपूजनं ।
सूर्य्याद्याराधनां तस्मिन् भ्रान्तस्वान्ता अमिश्रयन् ३६०॥
अर्कादितेजसा गत्वा ह्युज्ज्वलेन चमत्कृतिं ।
प्रभावं मेनिरे दैवं संस्थितं भास्करादिषु ॥३६१॥
दिव्यं विलोक्य चाकाशं शुभ्रताराविचित्रितं ।
अदृष्टपारमब्धिञ्च तथाद्रीन् हिमशेखरान् ॥३६२॥

सर्वत्र देवता भिन्ना भिन्नस्थालयवासिनीः । युग्मं ॥
नाकीयाः पार्वती[illegible] सा[illegible]श्चाप्यकल्पयन् ॥३६३॥
श्रौता मंत्रा यदा [illegible] व्यरच्यंत तदेदृशीं ।
सूर्य्याद्याराधनां लोका भारतीयाः समाचरन् ॥३६४॥
प्रायो हि श्रौतमंत्रेषु वरुणेन्द्रादिदेवताः ।
नाकोद्ध्योकसः स्तोत्रैः प्रशस्यन्ते मुहुर्मुहुः ॥३६५॥
अनेनोक्तेन रूपेण सोमसूर्य्यादितेजसा ।
मर्त्याश्चमत्कृतास्तेषां कर्त्तुमारेभिरे ऽर्चनां ॥३६६॥
यानि स्तोत्राणि चात्रत्यास्तेषां प्रारचयन् जनाः ।
तान्येव वैदिका मंत्राः प्राक्तना इति बुध्यतां ॥३६७॥
नासंस्तन्मंत्रवक्तार ईश्वरेण प्रचोदिताः ।
भ्रान्तास्त्वसत्यदेवानां स्वयं ते कल्पयन् स्तवान् ॥३६८॥
ये मौढ्यान् मुनयो ऽग्न्यादीनार्चन् त्यक्त्वा परेश्वरं ।
कथं तान् चोदयेदीशः स्तोतुं स्वानिष्टदेवताः ॥३६९॥

॥ शिष्य उवाच ॥

महाभूतस्वरूपाणां देवतानामुपासना ।
वेदेष्वादिश्यते भूयो गुरो तत्र न संशयः ॥३७०॥
परन्त्वग्नीन्द्रमित्रादीन् मूर्त्तान् प्रतिनिधीनिव ।
अदृश्येशस्य किं नार्चन् प्रत्ना वेदानुयायिनः ॥३७१॥

॥ गुरुरुवाच ॥

इन्द्रादीन परमेशस्य मूर्त्तान् प्रतिनिधीनिव ।
प्राशंसन् वेदवक्तार आद्या इत्थं न भाति मे ॥३७२॥

देवा हि प्रत्नमंत्रेषु बहवो विविधाऽहुताः ।
इन्द्रो वह्निश्च वायुश्च सविता चाश्वि[illegible] ॥३७३॥
विश्वेदेवाश्च सोमश्च त्वष्टा च वरुणा[illegible] ।
इन्द्राणी वरुणानी च सरस्वत्यादयोऽपि च ॥३७४॥
तान् सर्वान् मंत्रवक्तारो विभोः प्रतिनिधीनिव ।
अमन्यन्तेति मे नैव भाति मंत्रविचारणात् ॥३७५॥
व्याख्यातारस्तु मंत्राणां ये ऽभवन्नुत्तरा बुधाः ।
ते एवैतादृशीं व्याख्यामूचुर्ब्रह्मैक्यवादिनः ॥३७६॥
अन्यच्चेन्द्रादिदेवानां स्थिता मंत्रेषु भूरिषु ।
स्तवा ये तैर्यथार्हं न महिमेशस्य नूयते ॥३७७॥
ईशस्य वर्णनं सौम्यं तन्माहात्म्यस्तवान्विते ।
वेदेषु कुत्रचिद् भाति मिश्रितं त्वनृतैर्मतैः ॥३७८॥
स्रष्टुर्हि तेन सृष्टस्य जगतश्च विविक्तता ।
न वेदे संमता किंतु सृष्टस्रष्टोरभिन्नता ॥३७९॥
तस्मादाराधनेशस्य सम्यङ्‌ नादिश्यते श्रुतौ ।
महांस्तु वर्न्नते तत्र विषये ऽस्मिन् मतभ्रमः ॥३८०॥

॥ शिष्य उवाच ॥

वेदान्तन्यायसांख्यादिदर्शनानां मनीषिभिः ।
ज्ञानेप्सुकैरधीतानां गुरो तत्वं प्रपंचय ॥३८१॥

॥ गुरुरुवाच ॥

आन्वीक्षिकीप्रवीणानां विदुषां बुद्धिसूक्ष्मता ।
अर्थस्य चैव गांभीर्य्यं दर्शनेषु प्रतीयते ॥३८२॥

किंतु दर्शनवक्तारो मुनयो ये प्रकीर्त्तिताः ।
बुद्ध्याऽतिमानुषा नासन्न तिसूक्ष्मधियोऽपि ते ॥३८३॥
आन्वीक्षिक्यादिशास्त्रेषु यावती बुद्धिसूक्ष्मता ।
वेदान्तादिप्रवक्तॄणां प्राचामासीद् विपश्चितां ॥३८४॥
पूर्वेषु तावती ज्ञेया यावनेषु मनीषिषु । युग्मं॥
स्थिता धीसूक्ष्मता चित्रा परमार्थस्य मार्गणे ॥७८५॥
प्राचीना यवनास्ते तु तर्कपंचानना अपि ।
स्वां विद्यां मुनिभिः प्रोक्तामिति नोचुः कदाचन ॥३८६॥
स्वकीयबुद्धिशक्त्या तु विचारेण स्वकेन च ।
श्रमेण चार्जितं ज्ञानं मेनिरे यवना अमी ॥३८७॥
अज्ञातोत्पत्तिकालीना यास्तु विद्याश्चिरोद्भवाः ।
ता आर्षीरेव देशेऽस्मिन् वावद्यन्ते विपश्चितः ॥३८८॥
विद्यास्तु शिष्य यावत्य आद्रियन्तेऽत्र तावतीः ।
ससर्ज मानुषी बुद्धिर्नतूवाच मुनिव्रजः ॥३८९॥

॥ शिष्य उवाच ॥

सर्वा दार्शनिकी विद्या मर्त्यधीकौशलार्जिता ।
नत्वैश्वरीति भावत्को ह्यनुभूतो मयाऽऽशयः ॥३९०॥
किन्तु याऽऽसादिता विद्या विचारेण विपश्चितां ।
किं न प्रामाणिको बोध्या गुरो सा मुक्तिदाऽपि च॥३९१॥

॥ गुरूरुवाच ॥

मतस्य संमतिर्नास्ति दर्शनानां परस्परा ।
अनेकधाविरोधस्तु तत्तदर्थेषु विद्यते ॥३९२॥

तन्नन्मतानुगानां च विवादो वर्त्तते मिथ ।
मतं स्थापयतां स्वीयं परकी[illegible] ॥३९३॥
यथा वेदान्तसूत्रेषु सांख्यवैशेषिक[illegible]
प्रधानपरमाण्वादिविषयं खण्ड्यते म[illegible] ॥३९४॥

॥ शिष्य उवाच ॥

यस्तत्तद्दर्शनार्थेषु विपर्य्यायः प्रतीयते ।
तं मे भवान् समासेन व्याकरोतु बुभुत्सवे ॥३९५॥

॥ गुरूरुवाच ॥

एकत्वमात्मनः शिष्य वेदान्ते प्रतिपाद्यते ।
मता त्वनेकता सांख्ये योगशास्त्रे तथैव च ॥३९६॥

॥ तथा च वेदान्तमतं ब्रह्मविन्दूपनिषदुक्तं ॥

एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचंद्रवत् ॥
नित्यः सर्वगतो ह्यात्मा कूटस्थो दोषवर्जितः ।
एकः स विद्यते भ्रान्त्या मायया न स्वभावतः ॥

॥ सांख्यकारिका च ॥

जननमरणकरणानां प्रतिनियमादयुगपत् प्रवृत्तेश्च
पुरुषबहुत्वं सिद्धं त्रैगुण्यविपर्य्ययाच्चैव ॥१८॥

॥ अपि च कपिलसूत्रं ॥

जन्मादिव्यवस्थातः पुरुषबहुत्वं

तथाच योगसूत्रं

क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः
क्लेशादिभिरपरामृष्टस्त्रिष्वपि कालेषु न संस्पृष्टः पुरुषविशेषो
न्येभ्यः पुरुषेभ्यो विशिष्यते इति विशेष ईश्वर ईश्वनशीलः इ[illegible]

मावेण सकलजग[illegible]श्रमः । यद्यपि सर्वेषामात्मनां क्लेशादिस्पर्शो नास्ति तथापि [illegible] प्रदिश्यते । यथा योद्धृगतजयपराजयौ स्वामिनः ॥ [illegible]पि कालेषु तथाविधो ऽपि क्लेशादिपरामर्शो नास्ति । [illegible]तः स [illegible] एव भगवानीश्वरः । नच जीवन्मुक्तेष्वतिव्याप्तिः मुक्तात्मनां हि क्लेशादियोगस्तैस्तैः [illegible]पायैर्निवर्त्तितः । परमेश्वरस्य तु सर्वदैव तथात्वान्नमुक्तात्मतुल्यत्वमित्यन्यच धारेश्वरटीकायां विस्तरः ॥

निमित्तकारणं ब्रह्म तथोपादानकारणं ।
विश्वस्यास्येति वेदान्ते विद्धि ब्रह्मनिरूपणं ॥३९७॥
प्रधानमेव सांख्ये तु जगतो मूलमुच्यते ।
वैशेषिके ऽणवस्त्वेव भूतमूलात्मका मताः ॥३९८॥
तथैव भगवद्गीताकारको ऽपि त्रयोदशे ।
अध्याये पुरुषस्याह प्रकृतेश्चाप्यनादितां ॥३९९॥

तथाच १९ । २० श्लोकयोक्तं

प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ॥
कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषः प्रकृतिस्थो हि भुंक्ते प्रकृतिजान् गुणानिति ॥

इत्यादिकविपर्य्ययाद् दर्शनानां परस्परं ।
प्रामाण्यं कस्य मंतव्यं कस्य नेति न निश्चयः ॥४००॥

॥ शिष्य उवाच ॥

वेदवाक्यानुकूलत्वाद् वेदान्तस्य मनीषिणः ।
मन्यन्ते मुख्यतां तस्य प्रामाण्यं च विशेषतः ॥४०१॥

तस्माच्च भवतश्चेन् न वेदान्ते वि[illegible]त्तिः ।
तद्धेतुं विस्तरात् तर्हि भव[illegible]थाच्च [illegible]ति ॥४०२॥

॥ गुरुरुवाच ॥

निमित्तकारणं ब्रह्मैवोपादानं च संमृ[illegible]ः ।
ब्रह्मेत्र कार्य्यमप्येवं वेदान्ते प्रतिपादितं ॥४०३॥
ततः प्रयान्ति भूतानि पुनस्तत्र विशंति च ।
नरात्मा चैव तस्यांशो लहरी वारिधेरिव ॥४०४॥
आत्मा ऽयं देहयुक्तत्वादज्ञानेन परिप्लुतः ।
ब्रह्माद्वैतं तु विज्ञाय मुक्तो ब्रह्मणि लीयते ॥४०५॥
इत्येष शिष्य मे सारो वेदान्तस्य प्रतीयते ।
किंत्वत्रास्वीकृतिं मे त्वं विद्धि वक्तव्यकारणात् ॥४०६॥
ब्रह्मसंसारयोर्यो ऽत्र ह्यभेदः प्रतिपादितः ।
सो ऽन्याय्यो भाति मे सम्यगसंभाव्यश्च सर्वशः ॥४०७॥
य एकमेव विश्वस्य कारणं परमेश्वरः ।
स आत्मरूपको ऽनादिर्निर्व्विकारश्च विद्यते ॥४०८॥
परन्त्वचेतनं दृश्यस्पृश्यवस्तुमयं जगत् ।
अनात्मरूपकं ज्ञेयं व्यतिरिक्तं तथा ऽऽत्मनः ॥४०९॥
य आत्मरूपको नित्यं निर्विकारो ऽपि चेश्वरः ।
कथं सो ऽनात्मरूपत्वं परिणम्य व्रजेत् स्वयं ॥४१०॥

॥ शिष्य उवाच ॥

विश्वोपादानहेतुत्वे ब्रह्मणो ऽस्वीकृते सति ।
प्रधानं परमाणून् वा जगन्मूलं ब्रवीषि किं ॥४११॥

॥ गुरुरुवाच ॥

नाऽनादिन[illegible]ऽनेन जगतीमीश्वरोऽसृजत् ।
न वा तां [illegible]न्ये ऽनादिभिः परमाणुभिः ॥४१२॥
ईशो हि केवलोऽनादिर्न प्रधानं नचाणवः ।
विद्यन्तेऽनादयः किम्वा जगतो मूलरूपकाः ॥४१३॥
स्वतंत्रस्त्वसतो विश्वमुदपादयदीश्वरः ।
आदावास्तैकको ह्यीशः स विश्वं चासतोऽसृजत् ॥४१४॥
ईशाद् विना ऽभविष्यच्चेत् किंचिदन्यदनादिकं ।
स्वतंत्रः सर्वशक्तिश्च नाभविष्यत् तदेश्वरः ॥४१५॥
कस्यापि रूपमात्रं हि वस्तुनो विकरोति यः ।
प्रागेव विद्यमानस्य सर्वशक्तिर्न भाति सः ॥४१६॥
परंतु योऽसतः किंचिद् वस्तूत्पादयति स्वयं ।
अनन्तशक्तिमान् सम्यक् स एव प्रतिभाति मे ॥४१७॥
तथाच शिष्य वेदान्ते सांख्ये वैशेषिकेऽपि यत् ।
कृतं न रोचते मे तदीश्वरप्रतिपादनं ॥४१८॥

॥ शिष्य उवाच ॥

य आत्मा मर्त्यदेहेषु स्थितश्चेतनरूपकः ।
तमप्यंशं भवान् किं न मन्यते परमात्मनः ॥४१९॥

॥ गुरुरुवाच ॥

संयुक्तो मर्त्यदेहैर्य आत्मा चेतनरूपकः ।
कदाचिन् मन्तुमंशं तं नार्हति परमात्मनः ॥४२०॥

यतः सर्वज्ञता सत्ता ऽनन्तता ऽः
निर्विकारे गुणास्तिष्ठन्त्यक्षयाः परमा ॥४२१॥
मनुष्यसंस्थितात्मा तु न सर्वज्ञो न
तनुज्ञानान्वितस्त्वस्ति पाप्मना च भ ..कृतः ॥२२॥
परन्त्वस्मत्स्थितात्मा चेदंशः स्यात् परमात्मनः ।
तर्ह्यैश्वरैर्गुणैर्युक्तः स्यात् स सर्वज्ञतादिभिः ॥४२३॥
अनन्तः परमात्मा यो निर्विकारः सदा स्थितः ।
कथं सर्वज्ञता तस्य सत्ता वा न्यूनतां व्रजेत् ॥४२४॥
सर्वज्ञो निर्विकारश्च परमात्मा स्वयं कथं ।
देहायत्तस्ततः स्वस्य माहात्म्याज्ञानतामियात् ॥४२५॥
पवित्रः परमात्मा यो रागद्वेषादिवर्जितः ।
स रागद्वेषयुक्तत्वं पापित्वं च व्रजेत् कथं ॥४२६॥
यश्चानन्दमयो ऽजस्रं परमात्मा निरूपितः ॥
पीडाशोकादिकावस्थां विकृतः स कथं व्रजेत् ॥४२७॥
भुंजंति मोहशोकादीन् चेदंशाः परमात्मनः ।
तदा स परमात्मापि भुंक्ते मोहादिकं स्वयं ॥४२८॥
अन्यच्च निर्विकारस्याद्वितीयस्य परात्मनः ।
अंश्यत्वं खण्डनीयत्वं चेति वै संभवेत् कथं ॥४२९॥
तस्माच्छिष्य य आत्मानः संयुक्ता मर्त्यवर्ष्मसु ।
विविक्तान् ईश्वराद् विद्धि सादीनन्तवतश्च तान् ॥४३०॥
नृदेहजन्मनः काले तत्तद्युक्तात्मनामपि ।
उत्पत्तिं शिष्य जानीहि नच तेषामनादितां ॥४३१॥

प्रत्येकमानवस्यात्मा चानन्तो नैव विद्यते ।
अर्थात् नानन्तकालेऽयं स्थायी अन्तवांस्तु स्वभावतः ॥४३२॥

॥ शिष्य उवाच ॥

आत्मानो वर्ष्माभिः सार्द्धं म्रियंते मृत्यनेहसि ।
क्षयं च सर्वथा यान्ति किमित्थं मन्यते भवान् ॥४३३॥

॥ गुरूरुवाच ॥

नृमृत्युसमये नाशं न मन्येऽहं तदात्मनां ।
प्रत्युतास्माकमात्मानोऽक्षयाः स्थास्यंति शाश्वतं ॥४३४॥
मया यदधुना प्रोक्तं मानुषात्माऽन्तवानिति ।
तेन मनुष्यात्मा परिच्छिन्न इति मात्रं विवक्षितं ॥४३५॥
तथाच ब्रह्मणो ज्ञानं यद् वेदान्ते निरूप्यते ।
यथार्थं तन् न मे भाति न वा तज्ज्ञातृमुक्तिदं ॥४३६॥
अन्याख्यमयथार्थं च भ्रान्तिजं चैव यन् मतं ।
तस्यावलम्बनान् मुक्तिं तन्मन्तार इयुः कथं ॥४३७॥
यथार्थं चैव यज् ज्ञानं भ्रमहीनं च सर्वशः ।
तस्यापि विज्ञिमात्रेण कोऽपि श्रेयो न गच्छति ॥४३८॥
सज्ज्ञानस्यानुसारेण यः समाचरति क्रियाः ।
स एव केवलो मुक्तिं गन्तुं शक्नोति सज्जनः ॥४३९॥
तस्माच्च गम्यते मुक्तिः शास्त्रीयज्ञानमात्रतः ।
इत्थं मुक्त्युत्सुकैर्मर्त्यैर्न मन्तव्यं कदाचन ॥४४०॥
भूयो हि ज्ञानमासाद्य विद्वांसः पारमार्थिकं ।
न तेन साधुताधिक्यं दर्पवृद्धिं प्रयान्ति तु ॥४४१॥

विशेषतस्तु वेदान्ते यज्ज्ञानं प्रतिपाद्यते ।
तस्यैव विज्ञितो गर्ववृद्धेः संभा[illegible] ॥ ४४२ ॥
भावं स्वं मानुषं ध्यात्वा माहात्म्यं [illegible] हे ।
निर्वेदमीश्वरस्यार्चाश्वार्हन्त्याचरितुं [illegible]राः ॥ ४४३ ॥
अनन्तः पुण्य ईशः क्व सर्वज्ञः सर्वशक्तिमान् ।
क्व पापो मानुषः क्षुद्रो दुर्बुद्धिस्तुच्छशक्तिकः ॥ ४४४ ॥
ब्रह्मास्मीत्थं तु यो मर्त्यो वेत्ति वेदान्तमोहितः ।
यथार्हमीश्वरस्यार्चां स भीतिं वाचरेत् कथं ॥ ४४५ ॥
यथा च ज्ञानमात्रेण मुक्तिरिष्टा न गम्यते ।
तथैव कर्मभिर्मोक्षो लब्धुं शिष्य न शक्यते ॥ ४४६ ॥
कृतानि यैर्हि पापानि ते दण्डार्हा अवस्थिताः ।
तद्दण्डाद्यात्मनस्त्रातुं कर्मभिः शक्नुवन्ति न ॥ ४४७ ॥
संसारे मानवः को ऽपि निरङ्घस्को न विद्यते ।
दण्डं तु भोक्तुमर्हन्ति लोकाः सर्वे कुमण्डले ॥ ४४८ ॥
सुकर्मभिश्च पापानि न शोध्यन्ते कदाचन ।
नह्यङ्घोनाशकं किञ्चित् पुण्यं ज्ञेयं सुकर्मसु ॥ ४४९ ॥
सुक्रियाः सकला एव ज्ञातव्या ऋणरूपिकाः ।
तच्छोधनाच्च न ज्ञेयं शिष्यर्णान्तरशोधनं ॥ ४५० ॥
अन्यच्च यावतीर्मर्त्या अनुतिष्ठन्ति सुक्रियाः ।
तद्धेतोरपि दण्ड्यास्ते तत्र पापस्य मिश्रणात् ॥ ४५१ ॥
नृजातेर्भ्रष्टतां ज्ञानं न क्षिणोति स्वभावजां ।
तथैव तां सुकर्माणि न पुनन्ति कदाचन ॥ ४५२ ॥

तस्मादन्वेषणा कार्य्या मुक्त्युपायान्तरस्य मः ।
तथ्यस्तु पंचमाध्याय मुक्त्युपायो मयोदितः ॥४५३॥
अन्यच्च शिष्य, मुक्तिर्वेदान्ते प्रतिपाद्यते ।
सा मे ऽत्यसम्भवा भाति पंडितैरपि संमता ॥४५४॥
क्षुद्राणामीशभिन्नानां सादीनां चात्मनां कथं ।
अनन्ते निर्विकार्य्ये च लयः स्यात् परमात्मनि ॥४५५॥
वस्त्वन्यल् लीयते यस्मिंस्तस्य वृद्धिर्भवत्यपि ।
कथं वृद्धिस्त्वनन्तस्य सम्भवेत्परमात्मनः ॥४५६॥
वस्त्वन्यल् लीयते यस्मिन् तद् विकारं प्रगच्छति ।
विकारस्त्वविकार्य्यस्य न शक्यः परमात्मनः ॥४५७॥
लयो ऽपि नात्मनां चेत्तु सम्भवेत् परमात्मनि ।
तथापि नो लये भूते व्यक्तिबुद्धेः क्षयो भवेत् ॥४५८॥
स्वकीयव्यक्तिबोधे तु विगते मानवात्मनां ।
विलीनानां तदाऽवस्था किं न नाशसमा भवेत् ॥४५९॥
मुक्तिस्तु वास्तवी यादृक् सज्जनानां भविष्यति ।
तत् ते प्राक् पंचमाध्याये संक्षेपात् प्रोक्तवानहं ॥४६०॥

॥ शिष्य उवाच ॥

यद् भूयः पंडिताः प्राहुर्मायारूपमिदं जगत् ।
नृभावः स्वप्नरूपश्चेत्यत्र किं मन्यते भवान् ॥४६१॥

॥ गुरूरुवाच ॥

मायामयमिदं विश्वं स्वप्नरूपं च विद्यते ।
इत्येतद् व्याससूत्रेषु मतं क्वापि न वर्त्तते ॥४६२॥

न शारीरिकमीमांसाभाष्ये शंकरनिर्मिते ।
जगन्मायामयत्वस्य मतं तत्र [illegible]पाद्यते ॥४६३॥
किन्त्वेतदुत्तरैर्नूत्नं प्रोक्तं वेदान्तिभिः
न प्रत्नैस्त्विवति शास्त्राणां विचारेण प्र[illegible]ीयते ॥४६४॥

तथा च सांख्यप्रवचनभाष्ये विज्ञानभिक्षुणा
टीकाकारेण प्रोक्तं

नवीनानामपि प्रच्छन्नबौद्धानां मायावादिनां
बन्धहेतुत्वं निराकृतमिति ॥

अपि च प्रबोधचन्द्रोदयनाटक उक्तं

प्रत्यक्षादिप्रमासिद्धविरुद्धार्थाभिधायिनः ।
वेदान्ता यदि शास्त्राणि बौद्धैः किमपराध्यते इति ॥

तस्माच्च यन्मतं नोक्तं पूर्वैर्वेदान्तवक्तृभिः ।
नूत्नैस्तु कल्पितं तन्न ग्राह्यं स्याच्छास्त्रमंतृभिः ॥४६५॥
न मायारूपको ऽस्त्येष संसारो वास्तवस्त्विवति ।
किं प्रत्यक्षप्रमाणान्न जायते निश्चयो दृढः ॥४६६॥
तनोति त्वीश्वरो विश्वमसन्नो वंचयन्निव ।
इत्येष वंचनारोपो नार्हते कर्त्तुमीश्वरे ॥४६७॥
समस्तेष्विन्द्रियार्थेषु परमेशस्य कौशलं ।
दिव्यं प्रदर्शितं भाति धीमद्विस्मयकारकं ॥४६८॥
परीक्षां यावतीं मूर्त्तपदार्थानां करोति यः ।
तावत्या तच्चमत्कारबोधाधिक्यं भवत्यपि ॥४६९॥

इन्द्रियाणीन्द्रियार्थानां स्वेषां स्वेषां महाय च ।
प्रकल्पितानि दाक्ष्येण प्रतीयन्ते ऽद्भुतेन वै ॥४७०॥
यस्मिंस्त्वेतादृगीशस्य दिव्यदाक्ष्यनिदर्शनं ।
मन्ये मायामयत्वं तद्विष्टपस्य न सम्भवेत् ॥४७१॥

॥ शिष्य उवाच ॥

किं कायबन्धमुक्तत्वान् मर्त्यमुक्तिर्भवेद् गुरो ।
नृणां सविग्रहाणां वा किं विमुक्तिर्भविष्यति ॥४७२॥

॥ गुरूरुवाच ॥

न देहान् मोचनं मुक्तिः पापान् मोचनमेव तु ।
पापाद्धि जायते दुःखं नतु देहयुतत्वतः ॥४७३॥
वियुक्तानां शरीरेभ्य आत्मनां केवलं यदि ।
मुक्तिः शक्या तदा मुक्तिर्न मनुष्यैरवाप्यते ॥४७४॥
उभे यस्मिन् हि संयुक्ते जन्तावात्मकलेवरे ।
स एव मानुषः ख्यातो नात्ममात्रं तु मानुषः ॥४७५॥
वियुक्तो वपुषश्चात्मा पृथग् यावदवस्थितः ।
तावत् तं मानुषं नाहुरात्ममात्रं तु पंडिताः ॥४७६॥
तस्मान् नष्टे मनुष्यत्वे आत्मत्वे चैकके स्थिते ।
विमुक्तिरात्मनो ह्येव वेदान्ते प्रतिपाद्यते ॥४७७॥
अहं तु नात्ममात्राणां मुक्तिं भव्यां ब्रवीमि ते ।
सदेहमानुषाणां तु भव्यं मोक्षं सनातनं ॥४७८॥
यावद्विधा मनुष्याद्याः सृष्टा ईशेन जंतवः ।
शक्या ऽस्ति तावतां सिद्धिस्तत्तद्भावानुसारतः ॥४७९॥

निसर्गाद् देहसंयुक्ता ईश्वरेण कृता वयं ।
स्थिते ऽतो नः सदेहत्वे सिद्धिर्भवितुमर्हति ॥४८०॥
पापान्मुक्ताश्च ये मर्त्या इयुर्मुक्तिं सनातनीं ।
न ह्यात्मदेहयोस्तेषां वियोगो भविता पुनः ॥४८१॥
देहे स्वाभाविकी काचित् संस्थिता ऽस्त्यपवित्रता ।
एवं न विद्धि यद्यद्धीशेन सृष्टं तदुत्तमं ॥४८२॥
परन्त्वपुण्यता जाता पापाद्वात्मदेहयोः ।
नष्टे च किल्बिषे दोष उभयोरपि नंक्ष्यति ॥४८३॥

॥ शिष्य उवाच ॥

वियोगो मृत्युना किं न भवत्यात्मशरीरयोः ॥
अतस्तयोर्हि संयोगः कथं स्थास्यति शाश्वतः ॥४८४॥

॥ गुरूरुवाच ॥

वियोगः क्रियते सत्यं मृत्युनात्मशरीरयोः ।
तयोः पुनस्तु संयोगस्ततः पश्चाद्भविष्यति ॥४८५॥
श्रेयस्तु कीदृशं भव्यं केनोपायेन चार्ज्यते ।
तत् ते प्राक् पंचमाध्याये संक्षेपेणोक्तवानहं ॥४८६॥

॥ शिष्य उवाच ॥

अस्माकं पूर्वजन्मानि यानि भूतानि हे गुरो ।
न तेषां विषये किंचिन् मां विज्ञापितवान् भवान् ४८७॥

॥ गुरुरुवाच ॥

आवृत्तिर्जन्मनामात्मसंयोगश्च मुहुर्मुहुः ।
कलेवरान्तरैः शिष्य कदाचिन् न मया मतः ॥४८८॥
जन्मैकमेव विद्धि त्वं नाधिकं च नरात्मनां ।
तथैकमेव मृत्युं च विचाराहं तु तत्परे ॥४८९॥
जन्मन्यस्मिंश्च यादृशि नराः कर्माणि कुर्वते ।
तादृक् ते परलोके वै फलं भोक्ष्यन्ति शाश्वतं ॥४९०॥

॥ शिष्य उवाच ॥

चेत् प्राक्तनानि जन्मानि न मतानि गुरो तदा ।
मनुष्याः सकला दुःखं बहुधा भुञ्जते कथं ॥४९१॥
नाना च यो दशाभेदो वित्ताविताादिकोद्भवः ।
अस्माभिः किं न मंतव्यः प्राकक्रियाफलमेव सः ॥४९२॥

॥ गुरुरुवाच ॥

न पूर्वजन्मकर्मभ्यो ज्ञेयो दुःखसमुद्भवः ।
जन्मनो वर्त्तमानस्य कुकर्मभ्यस्तु केवलं ॥४९३॥
विषमूलात् फलं तिक्तं किल्विषाद् दुःखमुत्थितं ।
दण्डाय विहितं नृणां रुजश्चौषधरूपकं ॥४९४॥
निष्पापः कोऽपि संसारे मानुषो नेह वर्त्तते ।
तस्मान् नराः समे ऽर्हन्ति ताडनं दुःखरूपकं ॥४९५॥

न केवलं तु दंडार्थं नृणां दुःखस्य संस्थितिः ।
हितार्थं त्वपि तत्पापप्रतीकारस्वरूपिका ॥४९६॥
मर्त्या हि व्यसनासक्ता ऐहिकार्थैषिणोऽपि च ।
पुण्यस्य सत्पथं त्यक्त्वा प्रायोऽधर्मं भजंति ह ॥४९७॥
दुःखानां तीक्ष्णशास्त्या तु विपदामाक्रमेण च ।
रागाणां दम्यते शक्तिर्गर्वश्चैव धनादिजः ॥४९८॥
संसारे सुखचापल्यं ततो ज्ञात्वा च साधवः ।
विनीताः परलोकस्य शर्मेच्छंति सनातनं ॥४९९॥
पिता पुत्रं यथा शास्ति कृतदोषं दयामयः ।
दयस्तथेश्वरो मर्त्यान् अपराधनिवृत्तये ॥५००॥
लोके च यो दशाभेदो वित्ताविताादिजः स्थितः ।
न प्राक्जन्मक्रियाहेतुस्तत्रेच्छैवेश्वरस्य तु ॥५०१॥
सर्वान् हि मानुषान् ईशः स्वेच्छामात्रेण सृष्टवान् ।
स्वयेच्छयैव धीरूपार्थादिदानं विभक्तवान् ॥५०२॥
तस्मादस्माभिरन्यायारोपो नो कार्य्य ईश्वरे ।
स्वं वस्तु तेन दत्तं हि नाधिकारस्तु तत्र नः ॥५०३॥

॥ शिष्य उवाच ॥

संसारे चंचलेऽसारे विषयैरुत्तमैरपि ।
आनंदतृष्णजस्तृप्तिरात्मनो नैव जायते ॥५०४॥
तस्माद्व येषु संन्यासो वैराग्यं चोपदिश्यते ।
तच्छास्त्राणां मतं किन्न भवते रोचते भृशं ॥५०५॥

॥ गुरूरुवाच ॥

असारो ऽस्त्येव संसारस्तत्र शर्मेप्सुकस्य च ।
न तृप्तिरात्मनः शक्येत्यत्र शिष्य न संशयः ॥५०६॥
परन्तु कारणाद् यस्मात् सन्न्यासो मे न रोचते ।
मया तत् स्पष्टरूपेण वक्ष्यमाणं निशामय ॥५०७॥
व्यर्थानि मानुषा मूढा भूयः कर्माणि कुर्वते ।
ईशस्तु सर्वविद् व्यर्थं किञ्चित् कर्तुं न शक्यति ॥५०८॥
तस्माद्धितार्थमस्माकं विषयानीश्वरो ऽसृजत् ।
अस्मासु च न्यधात् रागान् नानाकर्मप्रवर्त्तकान् ॥५०९॥

॥ शिष्य उवाच ॥

बलात्कारेण रागाणां मज्जन्त्यङ्घस्सु मानवाः ।
तस्मात् किं रागदान्तिर्न तैः कर्त्तव्या सुयत्नतः॥५१०॥

॥ गुरूरुवाच ॥

स्वकान् रागान् वशीकर्तुं नरा अर्हन्ति नित्यशः ।
दृढश्च तद्बलात्कारो विनेतव्यः समन्ततः ॥५११॥
किंतु प्रीतिस्पृहाहर्षक्रोधशोकभयादिकान् ।
रागानावश्यकान् को ऽपि नोत्पाटयितुमर्हति ॥५१२॥
यतः स्वाभाविकै रागैर्विहितैरीश्वरेण तैः ।
क्रियाप्रवर्त्तकैर्नित्यं विद्यते नः प्रयोजनं ॥५१३॥

औचित्यवित्तिमात्राद्धि रागाणां चोदनाद् विना ।
नरो न कोऽपि चेष्टेत विषयाणामुपेक्षया ॥५१४॥
मनुष्या भोजनौचित्यबोधमात्रान् न भुंजते ।
क्षुधस्तु प्रेरणात् सर्वे एव खादन्ति मानवाः ॥५१५॥
अतोऽस्मत्संस्थितै रागैः स्वकीयविषयार्थिभिः ।
न बुद्धिमात्रशक्त्या तु कृतं जीवादिपालनं ॥५१६॥
अन्यच्च सिद्धिरस्माकं श्रमादेव प्रजायते ।
एवं व्यधान् नृजातेर्हि स्वभावं परमेश्वरः ॥५१७॥
विद्या हि सद्गुणोत्कर्षो यद्यदन्यच्च सत्तमं ।
परिश्रमार्जितं सर्वं तन्न चावाप्यतेऽन्यथा ॥५१८॥
विरागास्त्वभविष्यंश्चेत् सर्वे मर्त्या निसर्गतः ।
तदाऽलस्येन संबद्धास्तेऽभविष्यन् गुणोज्झिताः ॥५१९॥
प्रवृत्तिर्नाभविष्यच्च तर्हि संसारकर्मसु ।युग्मं॥
निद्रालुकात्मनां नृणां पशुतुल्यविचेतसां ॥५२०॥
यस्तु ना स्पृहया युक्तः स स्वकार्यार्थलिप्सया ।
नानोपायप्रयोगेण चेष्टते स्वेष्टलब्धये ॥५२१॥
तथाचानेन रूपेण रागाणां चोदनान् नराः ।
चिन्तां नानाविधां कृत्वा लभन्ते बुद्धिकौशलं ॥५२२॥
एतस्मिन् विषये शिष्य दृश्यते परमाद्भुता ।
धीमत्ता परमेशस्य मर्त्यकल्याणसाधिका ॥५२३॥
तस्मान्न कर्त्तुमर्हामो रागाणामवहेलनं ।
सृष्टानामीश्वरेणास्मद्धितार्थं न तु हानये ॥५२४॥

पुनः स्वार्थस्य सिद्ध्यर्थं केवलस्य नरा नहि ।
सृष्टा ईशेन संगत्यै त्वपरेषां नृणामपि ॥५२५॥
इत्थं मर्त्यस्वभावस्य परालापेच्छुकस्य वै ।
परालापक्षमस्यापि विचारेण प्रतीयते ॥५२६॥
येषां त्वेतादृशो भावस्ते नार्हन्ति स्वतुष्टये ।
विसृष्टुं जनसंसर्गमुपकर्तुं तु नॄन् परान् ॥५२७॥
स्त्रीभ्रातृसन्ततिस्नेहो युज्यते नृस्वभावजः ।
यत् स्नेहपात्रमर्हामः स्नेग्धुं नोपेक्षितुं तु तत् ॥५२८॥
वैराग्ये शिष्य धर्मो न मितसौख्यत्यजि स्थितः ।
नित्यायामीशभक्तौ तु चेष्टायुक्तक्रियासु च ॥५२९॥
सर्वे नरा अवस्थासु संस्थिता यासु कासुचित् ।
तास्वेव सत्क्रियाः कर्तुं शक्नुवंतीश्वरप्रियाः ॥५३०॥
धनं हि दत्तमीशेन येभ्यस्ते तद्धनं स्वकं ।
त्यक्तुं नार्हन्ति भोक्तुं तु मितरूपेण धर्मतः ॥५३१॥
अर्थोऽयं त्वीशकारुण्याल् लब्ध इत्थं निरंतरं ।
ध्यात्वोपकर्तुमर्हन्ति दीनांस्ते धनिनो मुदा ॥५३२॥
तथैव बुद्धिविद्यादिदानं यल् लब्धमीश्वरात् ।
कृतज्ञत्वेन तद्धेतोः स्तोतुमर्हाम ईश्वरं ॥५३३॥

॥ शिष्य उवाच ॥

योऽसारान् विषयान सर्वान् विजहात्यनपेक्षया ।
अत्यन्तं वै भवान् किं तं महात्मानं न मन्यते ॥५३४॥

॥ गुरूरुवाच ॥

यो ग्रस्तो विपदा शिष्य सहते क्षान्तमानसः ।
न वा ऽऽपल्लाघवज्ज्ञानान् न वा विषयहेलनात् ॥५३५॥
विपत्तिस्त्वीशनिर्णीता मद्धितायेति प्रत्ययात् ।
तमेव क्लेशसोढारं महात्मानं ब्रवीम्यहं ॥५३६॥ युग्मं॥
संसारविषयान् यस्तु विजहात्यनपेक्षया ।
महात्मनो ऽपि संन्यासस्तस्य भाति भ्रमोद्भवः ॥५३७॥

॥ शिष्य उवाच ॥

यः प्रोक्तो भवता वादो मततत्वप्रदर्शकः ।
स आदेरन्तपर्य्यन्तमेकाग्र्येण मया श्रुतः ॥५३८॥
तत्रापूर्वाण्यनेकानि प्रतिभान्ति मतानि मे ।
परन्तु प्रायशस्तेषु मदीया जायते रूचिः ॥५३९॥
श्रुतश्च यो गुरावस्मिन् विषये पारमार्थिके ।
भावत्को निर्णयस्तत्र मनो योक्ष्यामि तत्परः ॥५४०॥
यथा सत्यं च गच्छेयं न भ्रमेयं त्वसत्पथे ।
तथा मे नायको भूयात् सन्मार्गे परमेश्वरः ॥५४१॥
यत् त्वस्मदीयशास्त्रेषु भवदीयास्त्यसंमतिः ।
तस्मात् क्लिश्ये ऽहमाबाल्यात् तानि ह्याद‍ृतवानहं ॥५४२॥

॥ गुरूरुवाच ॥

एतद्देशीयशास्त्राणि मया नो संमतानि यत् ।
तस्मादहमपि क्लिश्ये विवादो हि ममाप्रियः ॥५४३॥

अत्रत्यानां च पाण्डित्यं प्रशंसामि विपश्चितां ।
तद्बुद्धेः सूक्ष्मतां वेद्मि काव्यशक्तिं च सुन्दरां ॥५४४॥
वैयाकरणिकां विद्यां तेषां जाने सुसंस्कृतां ।
गुणांश्च बहुलांस्तेषु विविधान् वच्मि संस्थितान् ॥५४५॥
अकारणो विवादश्च न कर्तव्यः कदाचन ।
इत्येषो ऽप्युपदेशो न कदाचिद् विस्मृतो मया ॥५४६॥
परन्तु विदुषां येषां महान् भाति मतिभ्रमः ।
तं तान् विज्ञप्तुमर्हन्ति मन्ये सच्छास्त्रधारिणः ॥५४७॥
तस्मादत्रत्यशास्त्राणि परलोकशुभार्थिभिः ।
जनैर्विसर्जनीयानीत्यहं ते स्पष्टमुक्तवान् ॥५४८॥
मतानां नहि सर्वेषां ज्ञेया शिष्य समानता ।
श्रेयो हि सन्मताज्जातं कुमतेभ्यस्त्वमंगलं ॥५४९॥
लभन्ते फलमत्यन्तं सच्छास्त्रेभ्यो हि सज्जनाः ।
तत्सन्नीत्या प्रगच्छन्तः शर्मदे धर्मवर्त्मनि ॥५५०॥
अज्ञातसत्यशास्त्रास्तु कुमतानि भजंति ये ।
भ्रमन्ति क्लेशदे मार्गे ते ऽन्धघोरध्वान्ते स्खलंति वा॥५५१॥
त्वत्त्राणकाङ्क्षया शिष्य न विवादेच्छया मया ।
सन्मार्ग उपदिष्टस्ते ज्ञापितश्चाप्यसत्पथः ॥५५२॥
सर्वेभ्यो विषयेभ्यो ऽपि परमार्थविचारणं ।
गरीयो विद्यते शिष्य चिन्तनीयं च यत्नतः ॥५५३॥
ईश्वरो ऽस्तीति सर्वत्र लोके स्वीकुरुते जनः ।
किन्त्वेतन्मात्रवित्तेः को मधुरं किल्विषं त्यजेत् ॥५५४॥

अतः स ईश्वरः कीदृक् पवित्रो ऽघःपराङ्मुखः ।
कुचिन्तातो ऽप्यसंतुष्टश्चेति त्वं संततं स्मर ॥५५५॥
इदानीं स्वान्तमर्मज्ञः सदा साक्षी च गुप्तदृक् ।
स सर्वा नः क्रिया वेत्ति निखिलं च मनोगतं ॥५५६॥
अन्ते महाविचाराहे चाविस्मर्त्ता ऽस्मदेनसां ।
न्यायेनाशेषमर्त्त्यानां स विचारं करिष्यति ॥५५७॥
आगन्तौ तद्दिने भीमे कृता संख्याङ्कसो वयं ।
दंड्या दंडात् परित्राणमिष्टं लप्स्यामहे कथं ॥५५८॥
अत्रैव शिष्य संसारे न तु लोकं परं गतैः ।
अस्माभिर्यत्नतः कार्य्यं त्राणोपायगवेषणं ॥५५९॥
दण्डात् त्राणार्थमस्माकमवतीर्य्येश्वरात्मजः ।
श्रीयेषूखृष्ट एनोघ्नं प्रायश्चित्तं व्यधात् स्वयं ॥५६०॥
ये लोकतारके तस्मिन् विश्वस्युर्वर्जितैनसः ।
धन्या भीमे विचाराहे ते गमिष्यंत्यघक्षमां ॥५६१॥

इति मतपरीक्षायां भारतीयशास्त्रविचारो नाम
षष्ठो ऽध्यायः ॥ ६ ॥

॥ समाप्ता चेयं मतपरीक्षा ॥

# सूचीपत्रं



——000——

# ERRATA.

*Page* viii. *line* 20, *for* by *read* of

अशुद्धपत्रं

| पत्रे | श्लोके | पंक्तौ | अशुद्धं | शुद्धं |
|---|---|---|---|---|
| ८ | २० | २ | ष्यपद्यते | ष्यपेक्षते |
| ९ | ३२ | १ | स्यास्थि | स्यास्ति |
| १२ | ५७ | २ | स्वेच्छाया | स्वेच्छया |
| १९ | २६ | २ | रुपे | रूपे |
| २१ | ४१ | २ | तद्वार्त्ता | तद्वार्त्तां |
| २२ | ४१ | २ | कल्पननेन | कल्पनेन |
| २९ | ३८ | २ | माचरयन् | माचारयन् |
| ४४ | १८३ | १ | नर्मुक्ति | न मुक्ति |
| ४५ | १९१ | १ | स्मान्नीत्ये | स्मन्नीत्यै |
| ४७ | २०८ | १ | गणे | गणो |
| ६१ | ११२ | १ | चिरन्तना | चिरोद्भवा |
| ६३ | १२७ | १ | श्रौत्रा | श्रौता |
| ६४ | १३५ | १ | ज्ञत्वा | ज्ञात्वा |
| ७३ | २२२ | १ | क्रिया | क्रियाः |
| ७७ | २४६ | २ | विराधस्तु | विरोधस्तु |
| — | २४७ | १ | क्षणो | क्षणे |
| — | २४८ | १ | मयद्भूते | मयोद्भूते |
| ७८ | ... | १ | गीताय | गीताया |
| ८० | २५६ | १ | भ्रमच्छेतृश्रुते | भ्रमच्छेतृ श्रुते |
| ९० | ३५५ | २ | वार्त्ता | वार्त्तां |
| ९२ | ३७६ | १ | श्रुन्तरा | श्रुत्तरा |